मठम् ॥ प्रविशन्तं तदा दृष्ट्वा श्वानं भयसमन्वितम् ॥ ५८ ॥ स तं पस्पर्श शनकैः स्थाणुतीर्थे ममज्ज ह ॥ पतितः पूर्वतीर्थेषु विप्रुषैः परिषेचितः ॥ ५९ ॥ शुनोऽस्य गात्रसंभूतैरब्बिन्दुभिः स सिञ्चितः ॥ विरक्तदृष्टिः स शुनः क्षणेन च ततः परम् ॥ ६० ॥ स्थाणुतीर्थस्य माहात्म्यात्स पुत्रेण च तारितः ॥ नियतस्तत्क्षणाज्जातो दिव्यदेहसमन्वितः ॥ प्रणिपत्य तदा स्थाणुं स्तुतिं कर्तुं प्रचक्रमे ॥ ६१ ॥ वेन उवाच ॥ प्रपद्ये देवमीशानं त्वामजं चन्द्रभूषणम् ॥ महादेवं महात्मानं विश्वस्य जगतः पतिम् ॥ ६२ ॥ नमस्ते देवदेवेश सर्वशत्रुनिषूदन ॥ देवेश बलिविष्टम्भिन्देवैर्दैत्यैश्च पूजित ॥ ६३ ॥ विरूपाक्ष सहस्राक्ष त्र्यक्ष यक्षेश्वरप्रिय ॥ सर्वतः पाणिपाद त्वं सर्वतोऽक्षिशिरोमुख ॥ ६४ ॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्त्य तिष्ठसि ॥ शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय ॥ ६५ ॥ गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते ॥ शतजिह्व शतावर्त शतोदर शतानन ॥ ६६ ॥ गायन्ति त्वां गायत्रिणो ह्यर्चयन्त्यर्कमर्किणः ॥ ब्रह्माणं त्वा शतक्रतोरूर्ध्वं त्वामिह मेनिरे ॥ ६७ ॥ मूर्तौ हि ते महामूर्ते समुद्रास्तु धरा तथा ॥ देवताः सर्व एवात्र गोष्ठे गाव इवासते ॥ ६८ ॥ शरीरे तव पश्यामि सोममग्निं जलेश्वरम् ॥ नारायणं तथा सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ ६९ ॥ भगवन्कारणं कार्यं क्रिया कारणमेव तत् ॥ प्रभवः प्रलयश्चैव सदसच्चापि दैवतम् ॥ ७० ॥ नमो भवाय शर्वाय वरदायोग्ररूपिणे ॥ अन्धकासुरहन्त्रे च पशूनां पतये नमः ॥७१॥ त्रिजटाय त्रिशीर्षाय त्रिशूलासक्तपाणये ॥ त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्न नमोऽस्तु ते ॥ ७२ ॥ नमो दण्डाय

चण्डाय अण्डायोत्पत्तिहेतवे ॥ डिण्डिमासक्तहस्ताय दण्डिमुण्डाय ते नमः ॥ ७३ ॥ नमोर्ध्वकेशदंष्ट्राय शुक्लायाविकृताय च ॥ धूम्रलोहितकृष्णाय नीलग्रीवाय ते नमः ॥ ७४ ॥ नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय च ॥ सूर्यमालाय सूर्याय स्वरूपध्वजमालिने ॥ ७५ ॥ नमो नानाभिरामाय नमः पटुतराय च ॥ नमो गणेन्द्रनाथाय वृषस्कन्धाय धन्विने ॥ ७६ ॥ संक्रन्दनाय चण्डाय पर्णधारपुटाय च ॥ नमो हिरण्यवर्णाय नमः कनकवर्चसे ॥ ७७ ॥ नमः स्तुताय स्तुत्याय स्तुतिस्थाय नमोऽस्तु ते ॥सर्वाय सर्वभक्षाय सर्वभूतशरीरिणे ॥ ७८ ॥ नमो होत्रे च हन्त्रे च सितोदग्रपताकिने ॥ नमो नमाय मन्त्राय नमः कटकटाय च ॥ ७९ ॥ नमोऽस्तु कृशनाशाय शयितायोत्थिताय च ॥ स्थिताय धामसाराय मुण्डाय कुटिलाय च ॥ ॥ ८० ॥ नमो नर्त्तनशीलाय लयवादित्रशालिने ॥ नाट्योपहारलुब्धाय मुखवादित्रशालिने ॥ ८१ ॥ नमो ज्येष्ठाय श्रेष्ठाय बलातिबलघातिने ॥ कालनाशाय कालाय संसारक्षयरूपिणे ॥८२॥ हिमवद्दुहितुर्भर्त्रे भैरवाय नमोऽस्तु ते ॥ उग्राय च नमो नित्यं नमोऽस्तु दशबाहवे ॥ ८३ ॥ चितिभस्मप्रियायैव कपालासक्तपाणये ॥ विभीषणाय भीष्माय हिमव्रतधराय च ॥ ॥ ८४ ॥ नमो विकृतवक्त्राय वक्रप्रान्तोग्रदृष्टये ॥ पक्वाममांसलुब्धाय तुम्बीवीणाप्रियाय च ॥ ८५ ॥ नमो वृषाङ्कवृक्षाय गोमिने ते नमो नमः ॥ कटङ्कटाय भीमाय नमः पचपचाय च ॥ ८६ ॥ नमः सर्ववरिष्ठाय वराय वरदायिने ॥ नमो विरक्तवक्त्राय भाव-

नायाक्षमालिने ॥८७॥ विभेदभेदभिन्नाय छायायै तपनाय च ॥ अघोरघोररूपाय घोरघोरतराय च॥८८॥ नमः शिवाय शान्ताय नमः शान्ततमाय च॥ बहुनेत्रकपालाय एकमूर्तें नमोऽस्तु ते॥८९॥नमः क्षुद्राय लुब्धाय यज्ञभागप्रियाय च ॥ पञ्चालाय सिताङ्गाय नमो यमनियामिने ॥ ९० ॥ नमश्चित्रोरुघण्टाय घण्टाघण्टनिघण्टिने ॥ सहस्रशतघण्टाय घण्टामालाविभूषिणे ॥ ९१ ॥ प्राणिसंघट्टघण्टाय नमः किलकिलप्रिय ॥ हुंहुंकाराय पाराय हुंकाराय प्रियाय च ॥ ॥ ९२ ॥ नमः समसमे नित्यं गृहवृक्षनिकेतिने ॥ गर्भमांसशृगालाय तारकाय तराय च॥९३॥नमो यज्ञाय यजिने हुताय प्रहुताय च॥ यज्ञवाहाय हव्याय तप्याय तपनाय च॥९४॥नमस्तुण्डाय तुण्ड्याय तुण्डानां पतये नमः ॥ अन्नदायान्नपतये नमो नानान्नभोजिने॥९५॥नमः सहस्रशीर्षाय सहस्रचरणाय च ॥ सहस्रोद्यतशूलाय सहस्राभरणाय च ॥९६॥ बालानुचरगोत्रे च बाललीलाविलासिने ॥ नमो बालाय वृद्धाय क्षुब्धाय क्षोभणाय च॥९७॥गङ्गालुलितकेशाय मुञ्जकेशाय वै नमः ॥ नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च॥९८॥नग्नप्राणाय चण्डाय कृशायास्फोटनाय च ॥ धर्मार्थकाममोक्षाणां कथ्याय कथनाय च॥९९॥ साङ्ख्याय साङ्ख्यमुख्याय साङ्ख्ययोगमुखाय च॥ नमो विरथरथ्याय चतुष्पथरथाय च ॥ १०० ॥ कृष्णाजिनोत्तरीयाय हरिकेश नमोऽस्तु ते ॥ त्र्यम्बिकाम्बिकनाथाय व्यक्ताव्यक्ताय वेधसे ॥१०१॥ काम कामद कामघ्न तृप्तातृप्त विचारिणे ॥ नमः सर्वदयापघ्न कल्पसंध्याविचारिणे ॥१०२॥ महासत्त्वमहाबाहो महाबल नमोऽस्तु ते ॥ महामेघधरप्रख्य महाकाल महाद्युते ॥१०३॥मेघावर्त्त युगावर्त चन्द्रार्कपतये नमः ॥ त्वमन्नमन्नभो- ॥ ८५

क्ता च पक्कभुक्पावनोऽनलः ॥ १०४ ॥ जरायुजाश्चाण्डजाश्च स्वेदोद्भिज्जाश्च ते नमः॥ त्वमेव देवदेवेश भूतग्राम-श्चतुर्विधः ॥ १०५ ॥ स्रष्टा चराचरस्यास्य पाता हन्ता तथैव च ॥ त्वामाहुर्ब्रह्मविद्वांसः परं ब्रह्मविदां गतिः ॥ १०६ ॥ मनसः परमं ज्योतिर्ज्योतिस्त्वं ज्योतिषामपि ॥ हंसो वृक्षो मधुकरः प्राहुस्त्वां ब्रह्मवादिनः ॥ १०७ ॥ यज्ञेष्टकाः श्रेष्ठकश्च त्वामाहुर्मुनयस्तथा ॥ पठ्यसे स्तुतिभिर्नित्यं वेदोपनिषदां गणैः ॥ १०८ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ॥ त्वमेव मेघसंघाश्च विद्युतोऽशनिगर्जितम् ॥ १०९ ॥ संवत्सरस्त्वमृतवो मासो मासार्धमेव च ॥ युगानि मेषाः काष्ठाश्च नक्षत्राणि ग्रहाबलाः ॥ ११० ॥ वृक्षाणां ककुभोऽसि त्वं गिरीणां हिमवान्गिरिः ॥ व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम् ॥ १११ ॥ क्षीरोदोऽस्युदधीनां च यन्त्राणां धनुरेव च॥ वज्रं प्रहरणानां च व्रतानां सत्यमेव च ॥ ११२ ॥ त्वमेव द्वेष इच्छा च रागो मोक्षः क्षमाक्षमे ॥ व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ॥११३॥त्वं शरी त्वं गदी चापि खट्वाङ्गी च शरासनी ॥ छेत्ता भेत्ता प्रहर्ताऽसि मन्ता नेता सनातनः ॥११४॥ दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ॥ समुद्राः सरितो गङ्गा पर्वताश्च सरांसि च ॥ ११५ ॥ लतावल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः ॥ पृथुकर्मगुणारम्भः कालः पुष्पफलप्रदः॥११६॥ आदिश्चान्तश्च वेदानां गायत्री प्रणवस्तथा ॥ लोहितो हरितो नीलः कृष्णः पीतः सितस्तथा ॥११७॥ कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ॥ सवर्णश्चाप्यवर्णश्च कर्त्ता हर्त्ता त्वमेव हि॥११८॥ त्वमिन्द्रश्च यमश्चै-

व वरुणो धनदोऽनिलः ॥ उपप्लवस्तत्र भानुः स्वर्भानुर्भानुरेव च ॥ ११९ ॥ शिष्या हौत्रं त्रिसौपर्णं यजुषां शतरुद्रियम् ॥ पवित्रं
च पवित्राणां मङ्गलानां च मङ्गलम् ॥१२०॥ तिन्दुको गिरिजो वृक्षो मुद्गं चाखिलजीविनाम् ॥ प्राणाः सत्त्वं रजश्चैव तमश्च प्रति-
पत्तिः ॥१२१॥ प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च ॥१२२॥ लोहितान्तर्गतो
दृष्टिर्महावक्त्रो महोदरः ॥ शुचिरोमा हरिश्मश्रुरूर्ध्वकेशश्चलाचलः ॥१२३॥ गीतवादित्रनृत्यज्ञो गीतवादित्रकप्रियः ॥ मत्स्यो जा-
लो जलौकाश्च कालकेलिः कलाकलिः ॥ १२४ ॥ अकालश्च विकालश्च दुष्कालः काल एव च ॥ मृत्युश्च मृत्युकर्त्ता च यज्ञो
यज्ञभयंकरः ॥ १२५ ॥ संवर्त्तकोऽन्तकश्चैव संवर्त्तकबलाहकः ॥ घण्टो घण्टी महाघण्टी चरी माली च मातलिः ॥ १२६ ॥ ब्रह्म-
कालयमाग्नीनां दण्डी मुण्डी त्रिमुण्डधृक् ॥ चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्त्तकः ॥१२७॥ चातुराश्रम्यनेता च चातुर्वर्ण्यकरस्तथा ॥
नित्यलक्षप्रियो मूर्तो गणाध्यक्षो गणाधिपः ॥ १२८ ॥ रक्तमाल्याम्बरधरो गिरिको गैरिकप्रियः ॥ शिल्पी च शिल्पिनां श्रेष्ठः
सर्वशिल्पप्रवर्तकः ॥ १२९ ॥ भगनेत्राङ्कुशः शंभुः पूष्णो दन्तविनाशनः ॥ स्वाहा स्वधा वषट्कारो नमस्कारो नमो नमः ॥१३०॥
गूढव्रतो गुह्यतपास्तारकस्तारकामयः ॥ धाता विधाता संधाता पृथिव्या धरणे परः ॥ १३१ ॥ ब्रह्मा तपश्च सत्यं च व्रतचर्यमथार्ज-
वम् ॥ भूतात्मा भूतकृद्भूतिर्भूतभव्यभवोद्भवः ॥ १३२ ॥ भूर्भुवः स्वर्ऋतं चैव ध्रुवो दान्तो महेश्वरः ॥ दीक्षितोऽदीक्षितः कान्तो दुर्दा-
न्तो दान्तसंभवः ॥ १३३ ॥ चन्द्रावर्तो युगावर्त्तः संवर्त्तः संप्रवर्त्तकः ॥ बिन्दुः कामो ह्यणुः स्थूलः कर्णिकारस्रजप्रियः ॥ १३४ ॥

नन्दिमुखो भीममुखः सुमुखो दुर्मुखस्तथा ॥ हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट् ॥ १३५ ॥ अधर्महा महादेवो दण्डधारो गणो-
त्कटः ॥ गोनर्दो गोप्रतारश्च गोवृषेश्वरवाहनः ॥ १३६ ॥ त्रैलोक्यगोप्ता गोविन्दो गोमार्गो मार्ग एव च ॥ स्थिरः श्रेष्ठश्च स्थाणुश्च
विकोपः कोप एव च ॥ १३७ ॥ दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः ॥ दुर्द्धर्षो दुष्प्रकाशश्च दुर्दर्शो दुर्जयो जयः ॥ १३८ ॥
शशाङ्कानलशीतोष्णक्षुत्तृषाश्च जरामयाः ॥ आधयो व्याधयश्चैव आधिहा व्याधिनाशनः ॥ १३९ ॥ समूहश्चासमूहश्च हन्ता देवः
सनातनः ॥ शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः ॥ १४० ॥ त्र्यम्बको दण्डधारश्च उग्रदंष्ट्रः कुलान्तकः ॥ विषापहः सुर-
श्रेष्ठः सोमपास्त्वं मरुत्पते ॥ १४१ ॥ अमृताशी जगन्नाथो देवदेवगणेश्वरः ॥ विषाग्निपाः सोमपाश्च क्षीरपा आज्यपास्तथा ॥ १४२ ॥
मधुश्च्युतानां मधुपा ब्रह्मवांस्त्वं घृतच्युतः ॥ सर्वलोकस्य भोक्ता त्वं सर्वलोकपितामहः ॥ १४३ ॥ हिरण्यरेताः पुरुषस्त्वमेक-
स्त्वं स्त्रीपुमांस्त्वं हि नपुंसकं च ॥ बालो युवा स्थविरो जीर्णदंष्ट्रस्त्वन्ते गिरिर्विश्वकृद्विश्वकर्त्ता ॥ १४४ ॥ त्वं वै धाता विश्वकृतो
वरेण्यस्त्वां पूजयन्ति प्रणताः सदैव ॥ चन्द्रादित्यौ चक्षुषी ते भवानी त्वमेव चाग्निः प्रपितामहश्च ॥ सरस्वती वाग्बलमूलभूता
अहोरात्रं निमिषोन्मेषकर्त्ता ॥ १४५ ॥ न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते ॥ माहात्म्यं वेदितुं शक्ता याथातथ्येन
शंकर ॥ १४६ ॥ पुंसां शतसहस्राणि यत्समावृत्य तिष्ठति ॥ महतस्तमसः पारे गोप्ता मन्ता भवान्सदा ॥ १४७ ॥ यं विनिद्रा जितश्वासाः
सत्त्वस्थाः संजितेन्द्रियाः ॥ ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ १४८ ॥ या मूर्त्तयश्च सूक्ष्मास्ते न शक्या या निद-

र्शितुम् ॥ ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ १४९ ॥ रक्ष मां रक्षणीयोऽयं तवानघ नमोऽस्तु ते ॥ भक्तानुकम्पी भगवा-
न्भक्तश्चाहं सदा त्वयि ॥ १५० ॥ जटिने दण्डिने नित्यं लम्बोदर तथा कृतो ॥ दीर्घजिह्व महाद्रंष्ट्र तस्मै रुद्रात्मने नमः ॥ १५१ ॥
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ॥ कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ १५२ ॥ संभक्ष्य सर्वभूतानि युगान्ते
पर्युपस्थिते ॥ यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥ १५३ ॥ प्रविश्य वदनं राहोर्यः सोमं पिबते निशि ॥ ग्रसन्नर्कं च
स्वर्भानू रक्षितस्ते च तेजसा ॥ १५४ ॥ ये चानुपतिता गर्भा रुद्रतोकस्य रक्षिणः ॥ नमस्तेऽस्तु स्वधा स्वाहा प्राप्नुवन्ति मुदं तु
ते ॥ १५५ ॥ येऽङ्गुष्ठमात्राः पुरुषा देहस्थावरदेहिनाम् ॥ रक्षन्तु देहिनां नित्यं ते ममाप्याययन्तु वै ॥ १५६ ॥ ये नदीषु
समुद्रेषु पर्वतेषु गुहासु च ॥ वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥ १५७ ॥ चतुष्पथेषु रथ्यासु चत्वरेषु सभासु च ॥ हस्त्य-
श्वरथशालासु जीर्णोद्यानालयेषु च ॥ १५८ ॥ ये च पञ्चसु भूतेषु दिशासु विदिशासु च ॥ चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्क-
रश्मिषु ॥ १५९ ॥ रसातलगता ये च ये च तस्मात्परं गताः ॥ नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यश्च नित्यशः ॥ १६० ॥ येषां
न विद्यते संख्या प्रमाणं रूपमेव च ॥ असंख्या ये गणा रुद्रा नमस्तेभ्योऽस्तु नित्यशः ॥ १६१ ॥ प्रसीद मम भद्रं ते तव भावग-
तस्य च ॥ त्वयि मे हृदयं देव त्वयि बुद्धिर्मतिस्त्वयि ॥ १६२ ॥ स्तुत्वैवं स महादेवं विरराम द्विजोत्तमः ॥ १६३ ॥ [इति
श्रीवामनपुराणे पुलस्त्यनारदसंवादे सरोमाहात्म्ये सप्तचत्वारिंशोऽध्यायः] ॥ ४७ ॥ [सनत्कुमार उवाच ॥] अथैनमब्रवीद्देवस्त्रैलोक्या-

धिपतिर्भवः ॥ आश्वासनकरं चास्य वाक्यविद्वाक्यमुत्तमम् ॥१॥[शिव उवाच ॥]अहो तुष्टोऽस्मि ते राजन्स्तवेनानेन सुव्रत ॥ बहुनाऽत्र किमुक्तेन मत्समीपे वसिष्यसि ॥ २ ॥ उषित्वा सुचिरं कालं मम गात्रोद्भवः पुनः ॥ असुरो ह्यन्धको नाम भविष्यसि सुरान्तकृत् ॥ ३ ॥ हिरण्याक्षगृहे जन्म प्राप्य वृद्धिं गमिष्यसि ॥ पूर्वाधर्मेण घोरेण वेदनिन्दाकृतेन च ॥ ४ ॥ साभिलाषो जगन्मातुर्भविष्यसि यदा तदा ॥ देहं शूलेन हत्वाऽहं पातयिष्ये समार्बुदम् ॥ ५ ॥ तत्रापि कल्मषं त्यक्त्वा दृष्ट्वा मां भक्तितः पुनः ॥ ख्यातो गणाधिपो भूत्वा नाम्ना भृङ्गिरिटिः स्मृतः ॥ ६ ॥ मत्संनिधाने स्थित्वा त्वं ततः सिद्धिं गमिष्यसि ॥ वेनप्रोक्तं स्तवमिमं कीर्त्तयेद्यः शृणोति च ॥ ७ ॥ नाशुभं प्राप्नुयात्किंचिद्दीर्घमायुरवाप्नुयात् ॥ यथा सर्वेषु देवेषु विशिष्टो भगवाञ्छिवः ॥ ८ ॥ तथा स्तवो वरिष्ठोऽयं स्तवानां वेननिर्मितः ॥ यशोराज्यसुखैश्वर्यधनमानार्थकाङ्क्षिभिः ॥ ९ ॥ श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ व्याधितो दुःखितोदीनश्चोरराजभयान्वितः ॥१०॥ राजकार्यविमुक्तो वा मुच्यते महतो भयात् ॥ अनेनैव तु देहेन वर्णानां श्रेष्ठतां व्रजेत् ॥ ११ ॥ तेजसा यशसा चैव युक्तो भवति निर्मलः ॥ न राक्षसाः पिशाचा वा न भूता न विनायकाः ॥१२॥ विघ्नं कुर्युर्गृहे तत्र यत्रायं पठ्यते स्तवः ॥ शृणुयाद्या स्तवं नारी अनुज्ञां प्राप्य भर्तृतः ॥१३॥ मातृपक्षे पितुः पक्षे पूज्या भवति देविवत् ॥ शृणुयाद्यः स्तवं दिव्यं कीर्त्तयेद्वा समाहितः ॥ १४ ॥ तस्य सर्वाणि कार्याणि सिद्धिं गच्छन्ति नित्यशः ॥ मनसा चिन्तितं यच्च यच्च वाचाऽनुकीर्त्तितम् ॥१५॥ सर्वं संपद्यते तस्य स्तवनस्यानुकीर्त्तनात् ॥

मनसा कर्मणा वाचा कृतमेनो विनश्यति ॥ वरं वरय भद्रं ते यत्त्वया मनसेप्सितम् ॥ १६ ॥[वेन उवाच ॥] अस्य लिङ्गस्य
माहात्म्यात्तथा लिङ्गस्य दर्शनात् ॥ मुक्तोऽहं पातकैः सर्वैस्तव दर्शनतः किल ॥ १७ ॥ यदि तुष्टोऽसि देवेश यदि देयो वरो
मम ॥ देवस्वभक्षणाज्जातं श्वयोनौ तव सेवकम् ॥ १८ ॥ एतस्यापि प्रसादं त्वं कर्त्तुमर्हसि शंकर ॥ एतस्यापि भयान्मध्ये सरसो
ऽहं निमज्जितः ॥ १९ ॥ दैवैर्निवारितः पूर्वं तीर्थेऽस्मिन्स्नानकारणात् ॥ अयं कृतोपकारश्च एतदर्थं वृणोम्यहम् ॥ २० ॥ तस्यैत-
द्वचनं श्रुत्वा तुष्टः प्रोवाच शंकरः ॥ एषोऽपि पापनिर्मुक्तो भविष्यति न संशयः ॥ २१ ॥ प्रसादान्मे महाबाहो शिवलोकं गमि-
ष्यति ॥ तथा स्तवमिमं श्रुत्वा मुच्यते सर्वपातकैः ॥ २२ ॥ कुरुक्षेत्रस्य माहात्म्यं सरसोऽस्य महीपते ॥ मम लिङ्गस्य चोत्पत्तिं
श्रुत्वा पापैः प्रमुच्यते ॥ २३ ॥[सनत्कुमार उवाच ॥] इत्येवमुक्त्वा भगवान्सर्वलोकनमस्कृतः ॥ पश्यतां सर्वलोकानां तत्रैवान्त-
रधीयत ॥ २४ ॥ स च श्वा तत्क्षणादेव स्मृत्वा जन्म पुरातनम् ॥ दिव्यमूर्त्तिधरो भूत्वा तं राजानमुपस्थितः ॥ २५ ॥ कृत्वा
स्नानं ततो वैन्यः पितृदर्शनलालसः ॥ स्थाणुतीर्थे कुटीं शून्यां दृष्ट्वा शोकसमन्वितः ॥ २६ ॥ दृष्ट्वाऽब्रवीत्ततो वाक्यं हर्षेण
महताऽन्वितः ॥ सत्पुत्रेण त्वया वत्स त्रातोऽहं नरकार्णवात् ॥ २७ ॥ त्वयाऽभिषिञ्चितो नित्यं तीर्थस्थपुलिने स्थितः ॥ अस्य
साधोः प्रसादेन स्थाणोर्देवस्य दर्शनात ॥ २८ ॥ मुक्तपापश्च स्वर्लोकं यास्ये यत्र शिवः स्थितः ॥ इत्येवमुक्त्वा राजानं प्रति
ष्ठाप्य महेश्वरम् ॥२९॥ स्थाणुतीर्थे ययौ सिद्धिं तेन पुत्रेण तारितः ॥ स च श्वा परमां सिद्धिं स्थाणुतीर्थप्रभावतः ॥३० ॥ विमुक्तः

कलुषैः सर्वैर्जगाम भवमन्दिरम् ॥ राजा पितृऋणैर्मुक्तः परिपाल्य वसुंधराम् ॥ ३१ ॥ पुत्रानुत्पाद्य धर्मेण कृत्वा यज्ञं निरर्गलम् ॥ दत्त्वा कामांश्च विप्रेभ्यो भुक्त्वा भोगान्पृथग्विधान् ॥ ३२ ॥ सुहृदो द्रविणैर्युक्तान्कामैः संतर्प्य च स्त्रियः ॥ अभिषिच्य सुतं राज्ये कुरुक्षेत्रं ययौ नृपः ॥ ३३ ॥ तत्र तप्त्वा तपो घोरं पूजयित्वा च शंकरम् ॥ आत्मेच्छया तनुं त्यक्त्वा प्रयातः परमं पदम् ॥ ३४ ॥ एतत्प्रभावं तीर्थस्य स्थाणोर्यः शृणुयान्नरः ॥ सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥ ३५ ॥[इति श्रीवामनपुराणे सरोमाहात्म्ये पुलस्त्यनारदसंवादे अष्टचत्वारिंशोऽध्यायः]॥४८॥[मार्कण्डेय उवाच ॥]चतुर्मुखानामुत्पत्तिं विस्तरेण ममानघ ॥ पृथ्वीश्वराणां च तथा श्रोतुमिच्छा प्रवर्त्तते ॥ १ ॥[सनत्कुमार उवाच ॥]शृणु सर्वमशेषेण कथयिष्यामि तेऽनघ ॥ ब्रह्मणः स्रष्टुकामस्य यद्वृत्तं पद्मजन्मनः ॥ २ ॥ उत्पन्न एव भगवान्ब्रह्मा लोकपितामहः ॥ ससर्ज सर्वभूतानि स्थावराणि चराणि च॥३॥ पुनश्चिन्तयतः सृष्टिं जज्ञे कन्या मनोरमा ॥ नीलोत्पलदलश्यामा तनुमध्या सुलोचना ॥ ४ ॥ तां दृष्ट्वाऽभिमतां ब्रह्मा मैथुनायाजुहाव ताम् ॥ तेन पापेन महता शिरोऽशीर्यत वेधसः ॥ ५ ॥ तेन शीर्णेन स ययौ तीर्थं त्रैलोक्यविश्रुतम् ॥ सान्निहत्यं सरः पुण्यं सर्वपापक्षयावहम् ॥ ६ ॥ तत्र पुण्ये स्थाणुतीर्थे ऋषिसिद्धनिषेविते ॥ सरस्वत्युत्तरे तीरे प्रतिष्ठाप्य चतुर्मुखः ॥ ७ ॥ आराधयामास तदा धूपैर्गन्धैर्मनोरमैः ॥ उपहारैस्तथा हृद्यै रुद्रसूक्तैर्दिनेदिने ॥ ८ ॥ तस्यैवं भक्तियुक्तस्य शिवपूजारतस्य च ॥ स्वयमेवाजगामाथ भगवान्नीललोहितः ॥ ९ ॥ तमागतं शिवं दृष्ट्वा ब्रह्मा लोकपितामहः ॥ प्रणम्य शिरसा भूमौ स्तुतिं तस्य चकार

ह ॥ १० ॥ ब्रह्मोवाच ॥ नमस्तेऽस्तु महादेव भूतभव्यभवाश्रय ॥ नमस्ते स्तुतिनित्याय नमस्त्रैलोक्यपालिने ॥ ११ ॥ नमः पवित्रदेहाय सर्वकल्मषनाशिने ॥ चराचरगुरो गुह्य गुह्यानां च प्रकाशकृत् ॥ १२ ॥ रोगा न यान्ति भिषजैः सर्वरोगविनाशन ॥ रौरवाजिनसंवीत वीतशोक नमोऽस्तु ते ॥ १३ ॥ वारिकल्लोलसंक्षुब्धमहाबुद्धिविघट्टन ॥ त्वन्नामजापिनो देव न भवन्ति भवाश्रयाः ॥ १४ ॥ नमस्ते नित्यनित्याय नमस्त्रैलोक्यनाशिने ॥ शंकरायाप्रमेयाय व्याधीनां शमनाय च ॥ १५ ॥ परायापरिमेयाय सर्वभूतप्रियाय च ॥ योगेश्वराय देवाय सर्वपापक्षयाय च ॥ १६ ॥ नमः स्थाण्वे प्रसिद्धाय सिद्धवन्दिस्तुताय च ॥ भूतसंसारदुर्गाय विश्वरूपाय ते नमः ॥ १७ ॥ फणीन्द्रोक्तमहिम्ने ते फणीन्द्राङ्गदधारिणे ॥ फणीन्द्रवरहाराय भास्कराय नमो नमः ॥ १८ ॥ एवं स्तुतो महादेवो ब्रह्माणं प्राह शंकरः ॥ न च मन्युस्त्वया कार्यो भाविन्यर्थे कदाचन ॥ १९ ॥ पुरा वाराहकल्पे ते यन्मयाऽपकृतं शिरः ॥ चतुर्मुखं च तदभून्न कदाचिन्न शिष्यति ॥ २० ॥ अस्मिन्सन्निहिते तीर्थे लिङ्गानि मम भक्तितः ॥ प्रतिष्ठाप्य विमुक्तस्त्वं सर्वपापैर्भविष्यसि ॥ २१ ॥ सृष्टिकामेन च त्वया यतोऽहं प्रेरितः किल ॥ तेनाहं त्वां तथेत्युक्त्वा भूतेभ्यो दर्शनं गतः ॥ २२ ॥ दीर्घकालं तपस्तप्त्वा मग्नः संनिहिते स्थितः ॥ सुमहान्तं ततः कालं त्वं प्रतीक्षां ममाकरोः ॥२३॥ स्रष्टाऽहं सर्वभूतानां मनसा कल्पितस्त्वया ॥ सोऽब्रवीत्त्वां तदा दृष्ट्वा मां मग्नं च ततोऽम्भसि ॥ २४ ॥ यदि नैवाग्रजस्त्वेभ्यस्ततः स्रक्ष्यामहे प्रजाः ॥ त्वयैवोक्तश्च नैवास्ति त्वदन्यः पुरुषोऽग्रजः ॥ २५ ॥ स्थाणुरेष जले मग्नो विवशः कुरु

मद्धितम् ॥ स सर्वभूतानसृजद्दक्षादींश्च प्रजापतीन् ॥ २६ ॥ यैरिमं प्राकरोत्सर्वं भूतग्रामं चतुर्विधम् ॥ ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्वाः प्रजापतिम् ॥ २७ ॥ जिघत्सवस्तदा ब्रह्मन्सहसा प्राद्रवंस्तदा ॥ संभक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत् ॥ २८ ॥ अथासां च महावृत्तिः प्रजानां संविधीयताम् ॥ दत्तं ताभ्यस्त्वया ह्यन्नं स्थावराणां महौषधीः ॥ २९ ॥ जङ्गमानि च भूतानि दुर्बलानि बलीयसाम् ॥ विहितान्नाः प्रजाः सर्वाः पुनर्जग्मुर्यथागतम् ॥ ३० ॥ ततो ववृधिरे सर्वाः प्रीतियुक्ताः परस्परम् ॥ भूतग्रामे विवृद्धे तु तुष्टे लोकगुरौ त्वयि ॥ ३१ ॥ समुत्तिष्ठञ्जलात्तस्मात्प्रजाः संदृष्टवानहम् ॥ ततोऽहं ताः प्रजा दृष्ट्वा विहिताः स्वेन तेजसा ॥ ३२ ॥ क्रोधेन महता युक्तो लिङ्गमुत्पाद्य चाक्षिपम् ॥ तत्क्षिप्तं सरसो मध्ये ऊर्ध्वमेव यदा स्थितम् ॥ ३३ ॥ तदा प्रभृति लोकेऽस्मिन्स्थाणुरित्येष विश्रुतः ॥ सकृद्दर्शनमात्रेण विमुक्तः सर्वकिल्विषैः ॥ ३४ ॥ प्रयाति परमं मोक्षं यस्मान्ना वर्त्तते पुनः ॥ यश्चेह तीर्थे निवसेत्कृष्णाष्टम्यां समाहितः ॥ ३५ ॥ स मुक्तः पातकैः सर्वैरगम्यागमनोद्भवैः ॥ इत्युक्त्वा भगवान्देवस्तत्रैवान्तरधीयत ॥ ३६ ॥ ब्रह्मा विशुद्धपापस्तु पूज्य देवं चतुर्मुखम् ॥ लिङ्गानि देवदेवस्य ससृजे शरमध्यतः ॥ ३७ ॥ आद्यं ब्रह्मसरः पुण्यं हरेः पार्श्वे प्रतिष्ठितम् ॥ द्वितीयं ब्रह्मसदनं स्वकीये ह्याश्रमे कृतम् ॥ ३८ ॥ तस्यैव पूर्वदिग्भागे तृतीयं च प्रतिष्ठितम् ॥ चतुर्थं ब्रह्मणो लिङ्गं सरस्वत्यास्तटे स्थितम् ॥ ३९ ॥ कृतमेतानि तीर्थानि पुण्यानि पावनानि च ॥ ये पश्यन्ति निराहारास्ते यान्ति परमां गतिम्॥४०॥कृते युगे हरेः पार्श्वे त्रेतायां ब्रह्मणाश्रमे ॥ द्वापरे तस्य पूर्वेण सरस्वत्यास्तटे कलौ॥४१॥

एतानि पूजयित्वा तु दृष्ट्वा भक्तिसमन्विताः ॥ विमुक्ताः कलुषैः सर्वैः प्रयान्ति परमां गतिम् ॥ ४२ ॥ सृष्टिकाले भगवता
पूजितस्तु महेश्वरः ॥ सरस्वत्युत्तरे तीरे नाम्ना ख्यातश्चतुर्मुखः ॥ ४३ ॥ तं पूजयित्वा यत्नेन सोपवासो जितेन्द्रियः ॥ अगम्या-
गमनैर्दोषैर्मुच्यते नात्र संशयः ॥ ४४ ॥ ततस्त्रेतायुगे प्राप्ते स्थाणोर्देवसमीपतः ॥ पूजितं सुमहल्लिङ्गं तत्रापि च चतुर्मुखम् ॥४५॥
तं प्रणम्य श्रद्धधानो मुच्यते सर्वकिल्बिषैः ॥ लीलाशंकरसंभूतं तथा वै भानुशंकरम् ॥ ४६ ॥ तथैव द्वापरे प्राप्ते स्वाश्रमे प्राच्य
शंकरम् ॥ विमुक्तो राजसैर्भावैर्वर्णसंकरसंभवैः ॥ ४७ ॥ ततः कृष्णचतुर्दश्यां पूजयित्वा तु मानवः ॥ विमुक्तः पातकैः सर्वैरभो-
ज्यस्यान्नसंभवैः ॥ ४८ ॥ कलिकाले तु संप्राप्ते वसिष्ठाश्रममास्थितः ॥ चतुर्मुखं स्थापयित्वा ययौ सिद्धिमनुत्तमाम् ॥ ४९ ॥
तत्रापि ये निराहाराः श्रद्धधाना जितेन्द्रियाः ॥ पूजयन्ति महादेवं ते यान्ति परमं पदम् ॥ ५० ॥ इत्येतत्स्थाणुतीर्थस्य माहा-
त्म्यं कीर्त्तितं तव ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुक्तो भवति मानवः ॥५१ ॥[इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे सरोमाहात्म्ये
एकोनपञ्चाशत्तमोऽध्यायः]॥ ४९ ॥[सनत्कुमार उवाच ॥] ततोऽब्रवीद्देववरस्तु तीर्थं यस्माद्भवानेकतया प्रयाति ॥ पृथूदकेत्येव
च नाम तुभ्यं भविष्यते तीर्थवरः पृथिव्याः ॥ १ ॥ एवं पृथूदकं देवाः पुण्यं पापभयापहम् ॥ तं गच्छध्वं महातीर्थं याचिष्यन्तो
निबोधत ॥ २ ॥ यदा मृगशिरोऋक्षे शशिसूर्यौ बृहस्पतिः ॥ तिष्ठन्ति सा तिथिः पूर्वा त्वक्षया परिगीयते ॥ ३ ॥ तद्गच्छध्वं
सुरश्रेष्ठा यत्र प्राची सरस्वती ॥ पितॄनाराधयध्वं च तत्र श्राद्धेन भक्तितः ॥ ४ ॥ ततो मुरारिवचनं श्रुत्वा देवाः सवासवाः ॥

॥ ९० ॥

समाजग्मुः कुरुक्षेत्रे पुण्यं तीर्थं पृथूदकम् ॥ ५ ॥ तत्र स्नात्वा सुराः सर्वे बृहस्पतिमचोदयन् ॥ विवस्वन्भगवन्नृक्षमिदं मृगशिरः कुरु ॥ ६ ॥ पुण्यां तिथिं पापहरां तव कालोऽयमागतः ॥ प्रवर्त्तते रविस्तत्र चन्द्रमाऽपि विशत्यसौ ॥ ७ ॥ तवायत्तं गुरो कार्यं सुराणां तत्कुरुष्व वः ॥ इत्येवमुक्तो देवैस्तु देवाचार्योऽब्रवीदिदम् ॥ ८ ॥ यदि वर्षाधिपोऽहं स्यां ततो यास्यामि देवताः ॥ बाढमूचुः सुराः सर्वे ततोऽसौ प्राक्रमन्मृगम् ॥ ९ ॥ आषाढे मासि मार्गर्क्षे चन्द्रक्षयतिथिर्हि या ॥ तस्यां पुरन्दरः प्रीतः पिण्डं पितृषु भक्तितः ॥ १० ॥ प्रादात्तिलमधून्मिश्रं 'हविष्यान्नं कुरुष्व च' ॥ ततः प्रीतास्तु पितरस्तां प्राहुस्तनयां निजाम् ॥ ११ ॥ मेनां देवाश्च शैलाय हिमयुक्ताय वै ददुः ॥ तां मेनां हिमवाँल्लब्ध्वा प्रमादाद्देवतेष्वथ ॥ प्रीतिमानभवच्चासौ रेमे स तु यथेच्छया ॥ १२ ॥ ततो हिमाद्रिः पितृकन्यया समं संतर्पयन्वै विषयान्यथेष्टम् ॥ अजीजनत्सा तनयाश्च तिस्रो रूपातियुक्ताः सुरयोषितस्तु ॥ १३ ॥[इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे उमासंभवे कुरुक्षेत्रमाहात्म्यं नाम पञ्चाशत्तमोऽध्यायः]॥ ५०॥ [पुलस्त्य उवाच ॥] मेनायां कन्यकास्तिस्रो जाता रूपगुणान्विताः ॥ सुनाभ इति च ख्यातश्चतुर्थस्तनयोऽभवत् ॥ १ ॥ रक्ताङ्गी रक्तनेत्रा च रक्ताम्बरविभूषिता ॥ रागिणी नाम संजाता ज्येष्ठा मेनासुता मुने ॥ २ ॥ शुभाङ्गी पद्मपत्राक्षी नीलकुञ्चितमूर्धजा ॥ श्वेतमाल्याम्बरधरा कुटिला नाम चापरा ॥३॥ नीलाञ्जनचयप्रख्या नीलेन्दीवरलोचना ॥ रूपेणानुपमा काली जघन्या मेनकासुता ॥ ४ ॥ जातास्ताः कन्यकास्तिस्रः षडब्दात्पुरतो मुने ॥ कर्तुं तपः प्रयाताश्च देवास्ता ददृशुः शुभाः ॥ ५ ॥

ततो दिवाकरैः सर्वैर्वसुभिश्च तपस्विनी ॥ कुटिला ब्रह्मलोकं तु नीता शशिकरप्रभा ॥ ६ ॥ अथोचुर्देवताः सर्वाः किं त्वियं जन-
यिष्यते ॥ पुत्रं महिषहन्तारं ब्रह्मन्व्याख्यातुमर्हसि ॥ ७ ॥ ततोऽब्रवीत्सुरपतिर्नेयं शक्ता तपस्विनी ॥ शार्वं धारयितुं तेजो वराकी
मुच्यतां त्वियम् ॥ ८ ॥ ततस्तु कुटिला क्रुद्धा ब्रह्माणं प्राह नारद ॥ तथा यतिष्ये भगवन्यथा शार्वं सुदुर्धरम् ॥ ९ ॥ धारयि-
ष्याम्यहं तेजस्तथैव शृणु सत्तम ॥ तपसाऽहं सुतप्तेन समाराध्य जनार्दनम् ॥ १० ॥ यथा हरस्य मूर्धानं नमयिष्ये पितामह ॥
तथा देव करिष्यामि सत्यं सत्यं मयोदितम् ॥ ११ ॥[पुलस्त्य उवाच ॥]ततः पितामहः क्रुद्धः कुटिलां प्राह दारुणाम् ॥ भग-
वानादिकृद्ब्रह्मा सर्वेशोऽपि महामुने ॥ १२ ॥[ब्रह्मोवाच ॥] यस्मान्मद्वचनं पापे न क्षान्तं कुटिले त्वया ॥ तस्मान्मच्छापनिर्द-
ग्धा सर्वास्त्वापो भविष्यसि ॥ १३ ॥ इत्येवं ब्रह्मणा शप्ता हिमवद्दुहिता मुने ॥ आपोमयी ब्रह्मलोकं प्लावयामास वेगिनी ॥१४॥
तामुद्धतजलां दृष्ट्वा प्रबबन्ध पितामहः ॥ ऋक्सामाथर्वयजुर्भिर्बन्धनैः सर्वतो दृढम् ॥ १५ ॥ सा बद्धा संस्थिता ब्रह्मंस्तत्रैव
गिरिकन्यका ॥ आपोमयी प्लावयन्ती ब्रह्मणो विमलालयम् ॥ १६ ॥ या सा रागवती नाम साऽपि नीता सुरैर्दिवम् ॥ ब्रह्मणे
तां निवेद्यैव तामप्याह प्रजापतिः ॥ १७ ॥ साऽपि क्रुद्धाऽब्रवीच्चैनं तथा तप्स्ये महत्तपः ॥ यथा मन्नामसंयुक्तो महिषघ्नो भवि-
ष्यति ॥ १८ ॥ तां शशापाथ स ब्रह्मा संध्यारागो भविष्यति ॥ या मद्वाक्यमलङ्घ्यं वै सुरैर्लङ्घयसे बलात् ॥१९॥ साऽपि
जाता मुनिश्रेष्ठ संध्यारागवती ततः ॥ प्रतीच्छन्कृत्तिकाभागे शैलेय्या विग्रहं दृढम् ॥ २० ॥ ततो गते कन्यके द्वे ज्ञात्वा मेना

तपस्विनी ॥ तपसो वारयामास उमेत्येवाब्रवीच्च सा ॥ २१ ॥ तदेव माता नामास्याश्चक्रे पितृश्रुता शुभा ॥ उमेत्येव हि कन्यायाः
सा जगाम तपोवनम् ॥ २२ ॥ ततः सा मनसा देवं शूलपाणिं वृषध्वजम् ॥ रुद्रं चेतसि संधार्य तपस्तेपे सुदुष्करम् ॥ २३ ॥
ततो ब्रह्माऽब्रवीद्देवान्गच्छध्वं हिमवत्सुताम् ॥ इहानयध्वं तत्कालं तपस्यन्तीं हिमालये ॥ २४ ॥ ततो देवाः समाजग्मुर्ददृशुः शैल-
नन्दिनीम् ॥ तेजसा विजितास्तस्या न शेकुरुपसर्पितुम् ॥ २५ ॥ इन्द्रो मरुद्गणैः सार्धं निर्धूतस्तेजसा तया ॥ ब्रह्मणोऽधिकतेजो
ऽस्या विनिवेद्य प्रतिष्ठितः ॥ २६ ॥ ततो ब्रह्माऽब्रवीद्देवान्ध्रुवं शंकरवल्लभा ॥ यूयं सतेजसो नूनं विक्षिप्तास्तु हतप्रभाः ॥ २७ ॥
तस्माद्व्रजध्वं स्वं स्वं हि स्थानं भो विगतज्वराः ॥ सतारकं हि महिषं विदध्वं निहतं रणे ॥ २८ ॥ इत्येवमुक्ता देवेन ब्रह्मणा
सेन्द्रकाः सुराः ॥ जग्मुः स्वान्येव धिष्ण्यानि सद्यो वै विगतज्वराः ॥ २९ ॥ उमामपि तपस्यन्तीं हिमवान्पर्वतेश्वरः ॥ निवर्त्य
तपसस्तस्मात्सदारो ह्यनयद् गृहान् ॥३०॥ देवोऽप्याश्रित्य तद्रौद्रं व्रतं नाम निराश्रयम् ॥ विचचार महाशैलान्मेरुप्राग्र्यान्महा-
मतिः ॥ ३१ ॥ स कदाचिन्महाशैलं हिमवन्तं समागतः ॥ तेनार्चितः श्रद्धयाऽसौ तां रात्रिमवसद्धरः ॥ ३२ ॥ द्वितीयेऽह्नि
गिरीशेन महादेवो निमन्त्रितः ॥ इहैव तिष्ठस्व विभो तपःसाधनकारणात् ॥ ३३ ॥ इत्येवमुक्तो गिरिणा हरश्चक्रे मतिं च
ताम् ॥ तथा चाश्रममाश्रित्य त्यक्त्वा स स्वं निराश्रमम् ॥ ३४ ॥ वसतोऽप्याश्रमे तस्य देवदेवस्य शूलिनः ॥ तं देशमगम-
त्काली गिरिराजसुता शुभा ॥ ३५ ॥ तामागतां हरो दृष्ट्वा भूयोजातां प्रियां सतीम् ॥ स्वागतेनाभिसंपूज्य तस्थौ योगरतो

हरः ॥ ३६ ॥ सा चाभ्येत्य वरारोहा कृताञ्जलिपरिग्रहा ॥ ववन्दे चरणौ शैले सखीभिः सह भामिनी ॥ ३७ ॥
ततस्तु सुचिराच्छर्वः समीक्ष्य गिरिकन्यकाम् ॥ न युक्तं चैवमुक्त्वाऽथ सगणोऽन्तर्दधे ततः ॥ ३८ ॥ साऽपि शर्व-
वचो रौद्रं श्रुत्वा ज्ञानसमन्विता ॥ अन्तर्दुःखेन दह्यन्ती पितरं प्राह पार्वती ॥ ३९ ॥ तात यास्ये महारण्ये तप्तुं घोरं
महत्तपः ॥ आराधनाय देवस्य शंकरस्य पिनाकिनः ॥ ४० ॥ तथेत्युक्तं वचः पित्रा पादे तस्यैव विस्तृते ॥ ललिताख्या तप-
स्तेपे हराराधनकाम्यया ॥४१॥ तस्याः सख्यस्तदा देव्याः परिचर्यां तु कुर्वते ॥ समित्कुशफलं चापि मूलाहरणमादितः ॥४२॥
विनोदनार्थं पार्वत्या मृन्मयः शूलधृग्वरः ॥ कृतश्च तेजोयुक्तश्च रुद्रो मेऽस्त्विति साऽब्रवीत् ॥ ४३ ॥ पूजां करोति तस्यैव तं
पश्यन्ती मुहुर्मुहुः ॥ ततोऽस्यास्तुष्टिमगमच्छ्रद्धया त्रिपुरान्तकृत् ॥ ४४ ॥ बटुरूपं समाधाय आषाढी मुञ्जमेखली ॥ यज्ञो-
पवीती छत्री च मृगाजिनधरस्तथा ॥ ४५ ॥ कमण्डलुव्यग्रकरो भस्मारुणितविग्रहः ॥ प्रत्याश्रमं पर्यटन्स तं काल्याश्रममागतः ॥
॥ ४६ ॥ तमुत्थाय तदा काली सखीभिः सह नारद ॥ पूजयित्वा यथान्यायं पर्यपृच्छदिदं ततः ॥ ४७ ॥ [उमोवाच ॥] कस्मा-
दागम्यते भिक्षो कुत्र स्थाने तवाश्रमः ॥ कुतस्त्वं परिगन्तासि मम शीघ्रं निवेदय ॥ ४८ ॥ [भिक्षुरुवाच ॥] ममाश्रमपदं बाले
वाराणस्यां शुचिव्रते ॥ अथैतत्तीर्थयात्रायां गमिष्यामि पृथूदकम् ॥ ४९ ॥ [देव्युवाच ॥] किं पुण्यं तत्र विप्रेन्द्र यद्यासि त्वं पृथू- ॥ ९२ ॥
दके ॥ पथि स्नानेन च फलं केषु किं लब्धवानसि ॥ ५० ॥ [भिक्षुरुवाच ॥] मया स्नानं प्रयागे तु कृतं प्रथममेव हि ॥ ततो

ऽथ तीर्थे कुब्जाम्रे जयन्ते चण्डिकेश्वरे ॥ ५१ ॥ बन्धुवृन्दे च कर्कन्धे तीर्थे कनखले तथा ॥ सरस्वत्यामग्निकुण्डे भद्रायां तु त्रिविष्टपे ॥ ५२ ॥ कौनटे कोटितीर्थे च तक्षके च कृशोदरि ॥ निष्कामेन कृतं स्नानं ततोऽभ्यागां तवाश्रमम् ॥ ५३ ॥ इहस्थां त्वां समाभाष्य गमिष्यामि पृथूदकम् ॥ पृच्छामि यदहं त्वां वै तत्र न क्रोद्धुमर्हसि ॥ ५४ ॥ अहं यस्तपसाऽऽत्मानं शोषयामि कृशोदरि ॥ बाल्येऽपि संयततनुस्ततः श्लाघ्यं द्विजन्मनाम् ॥ ५५ ॥ किमर्थं भवती रौद्रं प्रथमे वयसि स्थिता ॥ तपः समाश्रिता भीरु संशयः प्रतिभाति मे॥५६॥ प्रथमे वयसि स्त्रीणां सह भर्त्रा विलासिनि ॥ सुभोगा भोगिताः काला व्रजन्ति स्थिरयौवने ॥ ॥ ५७ ॥ तपसा वाञ्छयन्तीह गिरिजे सचराचराः ॥ रूपाभिजनमैश्वर्यं तच्च ते वर्त्तते बहु ॥ ५८ ॥ तत्किमर्थमपास्यैतानलंकाराञ्जटा धृताः ॥ चीनांशुकं परित्यज्य किं त्वं वल्कलधारिणी ॥ ५९ ॥[पुलस्त्य उवाच ॥] ततस्तु तपसा वृद्धा देव्याः सोमप्रभा सखी ॥ भिक्षवे कथयामास यथावत्सा हि नारद ॥ ६० ॥[सोमप्रभोवाच ॥]तपश्चर्यां द्विजश्रेष्ठ पार्वत्या येन हेतुना ॥ तं शृणुष्व महाकाली हरं भर्त्तारमिच्छति ॥ ६१ ॥[पुलस्त्य उवाच ॥] सोमप्रभाया वचनं श्रुत्वा संकम्प्य वै शिरः ॥ विहस्य च महाहासं भिक्षुराह वचस्त्विदम् ॥ ६२ ॥ ॥[भिक्षुरुवाच ॥] वदामि ते पार्वति वाक्यमेवं केन प्रदत्ता तव बुद्धिरेषा ॥ कथं करः पल्लवकोमलस्ते समेष्यते शार्वकरं ससर्पम् ॥ ६३ ॥ तथा दुकूलाम्बरशालिनी त्वं मृगारिचर्माभिवृतस्तु रुद्रः ॥ त्वं चन्दनाक्ता स च भस्मभूषितो न युक्तरूपं प्रतिभाति मे त्विदम् ॥६४॥[पुलस्त्य उवाच ॥]एवं वादिनि विप्रेन्द्र पार्वती भिक्षुमब्र-

वीत् ॥ मामैवं वद भिक्षो त्वं हरः सर्वगुणाधिकः ॥ ६५ ॥ शिवो वाऽप्यथवा भीमः सधनो निर्धनोऽथवा ॥ अलंकृतो वा देवेश-
स्तथा वाऽप्यनलंकृतः ॥ ६६ ॥ यादृशस्तादृशो वाऽपि स मे नाथो भविष्यति ॥ निवार्यतामयं भिक्षुर्विवक्षुः स्फुरिताधरः ॥
न तथा निन्दकः पापी यथा श्रोता शशिप्रभे ॥ ६७ ॥[पुलस्त्य उवाच ॥]इत्येवमुक्त्वा वरदा समुत्थातुमथैच्छत ॥ ततोऽत्यज-
द्भिक्षुरूपं स्वरूपस्थोऽभवच्छिवः ॥ ६८ ॥ भूत्वोवाच प्रिये गच्छ स्वमेव भवनं पितुः ॥ तवार्थाय प्रहेष्यामि महर्षीन्हिमवद्गृहे
॥ ६९ ॥ यच्चेह रुद्रमीहन्त्या मृन्मयश्चेश्वरः कृतः ॥ असौ भद्रेश्वरेत्येवं ख्यातो लोके भविष्यति ॥ ७० ॥ देवदानवगन्धर्वा
यक्षाः किंपुरुषोरगाः ॥ पूजयिष्यन्ति सततं मानवाश्च शुभेप्सवः ॥ ७१ ॥ इत्येवमुक्ता देवेन गिरिराजसुता मुने ॥ जगामाम्बर-
माविश्य स्वमेव भवनं पितुः ॥ ७२ ॥ शङ्करोऽपि महातेजा विसृज्य गिरिकन्यकाम् ॥ पृथूदकं जगामाथ स्नानं चक्रे विधानतः
॥ ७३ ॥ ततस्तु देवप्रवरो महेश्वरः पृथूदके स्नानमपास्तकल्मषः ॥ कृत्वा सनन्दी सगणः सवाहनो महागिरिं मन्दरमाज-
गाम ॥७४॥ आयाति त्रिपुरान्तके सह गणैः पर्यायतः सप्तभिरारोहत्पुलको बभौ गिरिवरः संहृष्टचित्तः क्षणात् ॥ चक्रे दिव्य-
फलैर्जलेन शुचिना मूलैश्च कन्दादिभिः पूजां सर्वगणेश्वरैः सह विभोरद्रिस्त्रिनेत्रस्य तु ॥ ७५ ॥[इति श्रीवामनपुराणे पुलस्त्य-
नारदसंवादे उमासंभवे मन्दरगिरिप्रवेशो नाम एकपञ्चाशत्तमोऽध्यायः]॥ ५१ ॥[पुलस्त्य उवाच ॥] ततः संपूजितो रुद्रः शैलेन
प्रीतिमानभूत् ॥ सस्मार च महर्षींस्तु अरुन्धत्या समं ततः ॥ १ ॥ संस्मृतास्ते तु ऋषयः शंकरेण महात्मना ॥ समाजग्मुर्म-

हाशैलं मन्दरं चारुकन्दरम् ॥ २ ॥ तानागतान्समीक्ष्यैव देवस्त्रिपुरनाशनः ॥ अभ्युत्थायाभिपूज्यैतानिदं वचनमब्रवीत् ॥ ३ ॥
धन्योऽयं पर्वतश्रेष्ठः श्लाघ्यः पूज्यश्च दैवतैः॥ धूतपापस्तथा जातो भवतां पादपङ्कजैः ॥ ४ ॥ स्थीयतां विस्तृते रम्ये गिरिप्रस्थे
समे शुभे ॥ शिलासु पद्मवर्णासु श्लक्ष्णासु च मृदुष्वथ ॥ ५ ॥[पुलस्त्य उवाच ।।] इत्येवमुक्ता देवेन शंकरेण महर्षयः ॥ समवेत्य
त्वरुन्धत्या विविशुः शैलसानुनि ॥६॥ उपविष्टेषु ऋषिषु नन्दी देवगणाग्रणीः ॥ अर्घ्यादिभिः समभ्यर्च्य स्थितः प्रयतमानसः ॥
॥७॥ ततोऽब्रवीत्सुरपतिर्धर्म्यं वाक्यं हितं सुरान् ॥ आत्मनो यशसो वृद्ध्यै सप्तर्षीन्विनयान्वितान् ॥८॥[हर उवाच ।।] कश्यपात्रे
वारुणेय गाधेय शृणु गौतम ॥ भरद्वाज शृणुष्व त्वमङ्गिरस्त्वं शृणुष्व च ॥ ९ ॥ ममासीद्दक्षतनुजा प्रिया सा दक्षकोपतः ॥
उत्ससर्ज सती प्राणान्योगं दृष्ट्वा पुरा किल ॥ १० ॥ साऽद्य भूयः समुद्भूता शैलराजसुता उमा ॥ तां मदर्थाय शैलेन्द्रो याच्यतां
द्विजसत्तमाः ॥ ११ ॥[पुलस्त्य उवाच ।।] सप्तर्षयश्चैवमुक्ता बाढमित्यब्रुवन्वचः ॥ ॐ नमः शंकरायेति प्रोक्त्वा जग्मुर्हिमालयम्॥
॥ १२ ॥ ततोऽप्यरुन्धतीं शर्वः प्राह गच्छस्व सुन्दरि ॥ पुरन्ध्र्यो हि पुरन्ध्रीणां गतिं धर्मस्य वै विदुः ॥१३॥ इत्येवमुक्ता दुर्ल-
ङ्घ्यं लोकाचारा त्वरुन्धती ॥ नमस्ते रुद्र इत्युक्त्वा जगाम पतिना सह ॥ १४ ॥ गत्वा हिमाद्रिशिखरमोषधिप्रस्थमेव च ॥
ददृशुः शैलराजस्य पुरंदरपुरीमिव ॥ १५ ॥ ततः संपूज्यमानास्ते शैलयोषिद्भिरादरात् ॥ सुनाभादिभिरव्यग्रैः पूज्यमाना तु
पार्वती॥१६॥ गन्धर्वैः किंनरैर्यक्षैस्तथाऽन्यैस्तत्पुरस्सरैः ॥ विविशुर्भुवनं रम्यं हिमाद्रेर्हाटकोज्ज्वलम् ॥१७॥ ततः सर्वे महात्मान-

स्तपसा धौतकल्मषाः ॥ समासाद्य महाद्वारं संतस्थुर्द्वाःस्थकारणात् ॥ १८ ॥ ततस्तु त्वरितोऽभ्यागाद्द्वाःस्थोऽद्रिर्गन्धमादनः ॥ धारयन्वै करे दण्डं पद्मरागमयं महत् ॥ १९ ॥ ततस्तमूचुर्मुनयो गत्वा शैलपतिं शुभम् ॥ निवेदयास्मान्संप्राप्तान्महत्कार्यार्थिनो वयम् ॥ २० ॥ इत्येवमुक्तः शैलेन्द्रमृषिभिर्गन्धमादनः ॥ जगाम तत्र यत्रास्ते शैलराजोऽद्रिभिर्वृतः ॥ २१ ॥ निषण्णो भुवि जानुभ्यां दत्त्वा हस्तौ मुखे गिरिः ॥ दण्डं निःक्षिप्य कक्षायामिदं वचनमब्रवीत् ॥ २२ ॥[गन्धमादन उवाच ॥] इमे हि ऋषयः प्राप्ताः शैलराज तवाजिरे ॥ द्वारे स्थिताः कार्यिणस्ते तव दर्शनलालसाः ॥ २३ ॥[पुलस्त्य उवाच ॥] द्वाःस्थवाक्यं समाकर्ण्य समुत्थायाचलेश्वरः ॥ स्वयमभ्यागमद्द्वारि समादायार्घ्यमुत्तमम् ॥ २४ ॥ तानर्च्यार्घ्यादिना शैलः समानीय सभातलम् ॥ उवाच वाक्यं वाक्यज्ञः कृतासनपरिग्रहान् ॥ २५ ॥[हिमवानुवाच ]॥ अनभ्रवृष्टिः किमियमुताहोऽकुसुमं फलम् ॥ अप्रतर्क्यमचिन्त्यं च भवदागमनं त्विदम् ॥ २६ ॥ अद्यप्रभृति धन्योऽस्मि शैलराजोऽस्मि सत्तमाः ॥ संशुद्धदेहोऽस्म्यद्यैव यद्भवन्तो ममाजिरम् ॥ २७ ॥ असत्संसर्गसंशुद्धं कृतवन्तो द्विजोत्तमाः ॥ दृष्टिपूतं पदाक्रान्तं तीर्थं सारस्वतं यथा ॥ २८ ॥ दासोऽहं भवतां विप्राः कृतपुण्यश्च साम्प्रतम् ॥ येनार्थिनो हि ते यूयं तन्माऽनुज्ञातुमर्हथ ॥ २९ ॥ सदारोऽहं समं पुत्रैर्भृत्येन प्रभुरव्ययः ॥ किंकरोऽस्मि स्थितो युष्मदाज्ञाकारी तदुच्यताम् ॥ ३० ॥[पुलस्त्य उवाच]॥ शैलराजवचः श्रुत्वा ऋषयः संशितव्रताः ॥ ऊचुरङ्गिरसं वृद्धं कार्यमद्रौ निवेदय ॥ ३१ ॥ इत्येवं चोदितः सर्वैर्ऋषिभिः

कश्यपादिभिः ॥ प्रत्युवाच परं वाक्यं गिरिराजं तमङ्गिराः ॥ ३२ ॥ [अङ्गिरा उवाच ॥] श्रूयतां पर्वतश्रेष्ठ येन कार्येण वै वयम् ॥
समागतास्त्वत्सदनमरुन्धत्या समं गिरे ॥ ३३ ॥ योऽसौ महात्मा सर्वात्मा दक्षयज्ञक्षयंकरः ॥ शंकरः शूलधृक् शर्वस्त्रिणेत्रो वृष-
वाहनः ॥ ३४ ॥ जीमूतकेतुः शत्रुघ्नो यज्ञभोक्ता स्वयं प्रभुः ॥ यमीश्वरं वदन्त्येके शिवं स्थाणुवरं हरम् ॥ ३५ ॥ भीममुग्रं महे-
शानं महादेवं पशोः पतिम् ॥ त्यं तेन प्रेषिताः स्मस्त्वत्सकाशं गिरीश्वर ॥ ३६ ॥ इयं या त्वत्सुता काली सर्वलोकेषु सुन्दरी॥
तां प्रार्थयति देवेशस्तां भवान्दातुमर्हसि ॥ ३७ ॥ स एव धन्यो हि पिता यस्य पुत्री पतिं शुभम् ॥ रूपाभिजनसंपत्त्या प्राप्नोति
गिरिसत्तम ॥ ३८ ॥ यावन्तो जङ्गमागम्या भूताः शैल चतुर्विधाः ॥ तेषां माता त्वियं देवी यतः प्रोक्तः पिता हरः ॥ ३९ ॥
प्रणम्य शंकरं देवाः प्रणमन्तु सुतां तव ॥ कुरुष्व पादं शत्रूणां मूर्ध्नि भस्मपरिप्लुतम् ॥ ४० ॥ याचितारो वयं शर्वो वरो दाता
त्वमप्युमा ॥ वधूः सर्वजगन्माता कुरु यच्छ्रेयसे तव ॥४१॥ [पुलस्त्य उवाच ॥] तद्वचोऽङ्गिरसः श्रुत्वा काली तस्थावधोमुखी ॥
हर्षमागम्य सहसा पुनर्दैन्यमुपागता ॥ ४२ ॥ ततः शैलपतिः प्राह पर्वतं गन्धमादनम् ॥ गच्छ शैलानुपामन्त्र्य सर्वानाहर्तु-
मर्हसि ॥ ४३ ॥ ततः शीघ्रतरः शैलो गृहाद्गृहमगाज्जवी ॥ मेर्वाद्यान्पर्वतश्रेष्ठानाजुहाव समन्ततः ॥ ४४ ॥ तेऽप्याजग्मुस्त्वरा-
वन्तः कार्यं मत्वा महत्तदा ॥ विविशुर्विस्मयाविष्टाः सौवर्णेष्वासनेषु च ॥ ४५ ॥ उदयो हेमकूटश्च रम्यको मन्दरस्तथा ॥ उद्दा-
लको वारुणश्च वराहो गरुडासनः ॥ ४६ ॥ शुक्तिमान्वेगसानुश्च दृढशृङ्गोऽपि शृङ्गवान् ॥ चित्रकूटस्त्रिकूटश्च तथाऽन्ये क्षुद्र-

पर्वताः ॥ उपविष्टाः सभायां वै प्रणिपत्य ऋषींश्च तान् ॥४७॥ ततो गिरीशः स्वां भार्यां मेनामाहूतवान्स्वयम् ॥ समागच्छतु कल्याणी समं पुत्रेण भामिनी ॥ ४८ ॥ साऽभिवन्द्य ऋषीणां च चरणांश्च तपस्विनी ॥ सर्वान्ज्ञातीन्समाभाष्य विवेश ससुता तदा ॥ ४९ ॥ ततोऽद्रिषु महाशैल उपविष्टेषु नारद ॥ उवाच वाक्यं वाक्यज्ञः सर्वानाभाष्य सुस्वरम् ॥ ५० ॥[ हिमवानुवाच ]॥ इमे सप्तर्षयः पुण्या याचितारः सुतां मम ॥ महेश्वरार्थं कन्यां तु तच्चावेद्यं भवत्सु वै ॥५१॥ तद्वदध्वं यथान्यायंज्ञातयो यूयमेव मे ॥ नोल्लङ्घ्य युष्मान्दास्यामि तत्क्षमं वक्तुमर्हथ ॥ ५२ ॥[पुलस्त्य उवाच ॥] हिमवद्वचनं श्रुत्वा मेर्वाद्याः स्थावरोत्तमाः ॥ सर्व एवाब्रुवन्वाक्यं स्थितास्तेष्वासनेषु ते ॥ ५३ ॥ याचितारश्च मुनयो वरस्त्रिपुरहा हरः ॥ दीयतां शैल कालीयं जामाताऽभिमतो हि नः ॥ ५४ ॥ मेनाऽथ प्राह भर्त्तारं शृणु शैलेन्द्र मे वचः ॥ पितृभिस्तनया मह्यं दत्ताऽनेनैव हेतुना ॥ ५५ ॥ यस्तस्यां भूतपतिना पुत्रो दत्तो भविष्यति ॥ स हनिष्यति दैत्येन्द्रं महिषं तारकं तथा ॥५६॥ इत्येवं मेनया प्रोक्तः शैले शैलेश्वरः सुताम् ॥ प्रोवाच पुत्रि दत्ताऽसि शर्वाय त्वं मयाऽधुना ॥ ५७ ॥ ऋषीनुवाच कालीयं मम पुत्री तपोधनाः ॥ प्रणामं शंकरवधूर्भक्तिनम्रा करोति वः ॥ ५८ ॥ ततोऽप्यरुन्धती कालीमङ्कमारोप्य चाटुकैः ॥ विलज्जमानामाश्वास्य हरनामोचितैः शुभैः ॥ ५९ ॥ ततः सप्तर्षयः प्रोचुः शैलराज निशामय ॥ जामित्रगुणसंयुक्तां तिथिं पुण्यां सुमङ्गलाम् ॥ ६० ॥ उत्तराफाल्गुनीयोगं तृतीयेऽह्नि हिमांशुमान् ॥ गमिष्यति च तत्रोक्तो मुहूर्तो मैत्रनामकः ॥ ६१ ॥ तस्यां तिथौ हरः पाणिं ग्रहीष्यति समन्त्रकम् ॥ तव पुत्र्या वयं

यामस्तदनुज्ञातुमर्हसि ॥ ६२ ॥ ततः संपूज्य विधिना फलमूलादिभिः शुभैः ॥ विसर्जयामास शनैः शैलराड्डृषिपुंगवान् ॥६३॥
तेऽप्याजग्मुर्महावेगात्त्वाक्रम्य महदालयम् ॥ आसाद्य मन्दरगिरिं भूयोऽपश्यन्त शंकरम् ॥ ६४ ॥ प्रणम्योचुर्महेशानं भवान्भर्ता
ऽद्रिजा वधूः ॥ सब्रह्मकास्त्रयो लोका द्रक्ष्यन्ति घनवाहनम् ॥ ६५ ॥ ततो महेश्वरः प्रीत ऋषीन्सर्वाननुक्रमात् ॥ पूजयामास
विधिना अरुन्धत्या समं हरः ॥ ६६ ॥ ततः संपूजिता जग्मुः सुराणां मन्त्रणाय ते ॥ तेऽथाजग्मुर्हरं द्रष्टुं ब्रह्मविष्णिवन्द्रभा-
स्कराः ॥ ६७ ॥ ततः समभ्येत्य महेश्वरस्य कृतप्रणामा विविशुर्महर्षे ॥ सस्मार नन्दिप्रमुखांश्च सर्वानभ्येत्य ते वन्द्य हरं
निषण्णाः ॥ ६८ ॥ देवैर्गणैश्चापि वृतो गणेशः संशोभते मुक्तजटाग्रभारः ॥ यथा वने सर्जकदम्बमध्ये प्ररोहमूलोऽथ वनस्प-
तिर्वा ॥ ६९ ॥[इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे उमासंभवे गौरीविवाहे द्विपञ्चाशत्तमोऽध्यायः]॥ ५२ ॥[पुलस्त्य उवाच॥]
समागतान्सुरान्दृष्ट्वा नन्दिराख्यातवान्विभोः ॥ अथोत्थाय हरिं भक्त्या परिष्वज्य न्यपीडयत् ॥ १ ॥ ब्रह्माणं शिरसा नत्वा स-
माभाष्य शतक्रतुम् ॥ आलोक्यान्यान्सुरगणान्संभावयत्स शंकरः ॥ २ ॥ गणाश्च जय देवेति वीरभद्रपुरोगमाः ॥ शैवाः
पाशुपताद्याश्च विविशुर्मन्दराचलम् ॥ ३ ॥ ततस्तस्मान्महाशैलं कैलासं सह दैवतैः ॥ जगाम भगवाञ्छर्वः कर्तुं वैवाहिकं
विधिम् ॥ ४ ॥ ततस्तस्मिन्महाशैले देवमातादितिः शुभा ॥ सुरभिः सुरमा चान्याश्चक्रुर्मण्डनमाकुलाः ॥ ५ ॥ महास्थिशेखरी
चारुरोचनातिलको हरः ॥ सिंहाजिनी चातिनीलभुजंगकृतकुण्डलः ॥ ६ ॥ महाहिरत्नवलयहारकेयूरनूपुरः ॥ समुन्नतजटाभारो

वृषभस्थो विराजते ॥ ७ ॥ तस्याग्रतो गणाः स्वैः स्वैरारूढा यान्ति वाहनैः ॥ देवाश्च पृष्ठतो जग्मुर्हुताशनपुरोगमाः ॥ ८ ॥
वैनतेयं समारूढः सह लक्ष्म्या जनार्दनः ॥ प्रयाति देवपार्श्वस्थो हंसेन च पितामहः ॥ ९ ॥ गजाधिरूढो देवेन्द्रश्छत्रं शुक्लपटं
विभोः ॥ धारयामास विततं सहेन्द्राण्या सहस्रधृक् ॥ १० ॥ यमुना सरितां श्रेष्ठा वालव्यजनमुत्तमम् ॥ श्वेतं प्रगृह्य हस्तेन
कच्छपे संस्थिता ययौ ॥ ११ ॥ हंसकुन्देन्दुसङ्काशं वालव्यजनमुत्तमम् ॥ सरस्वती सरिच्छ्रेष्ठा गजारूढा समादधे ॥ १२ ॥
ऋतवः षट् समादाय कुसुमं गन्धसंयुतम् ॥ पञ्चवर्णं महेशार्थे जग्मुस्ते कामचारिणः ॥१३॥ मत्तमैरावतनिभं गजमारुह्य वेग-
वान् ॥ अनुलेपनमादाय ययौ तत्र पृथूदकः ॥ १४ ॥ गन्धर्वास्तुम्बरुमुखा गायन्तो मधुरस्वरम् ॥ अनुजग्मुर्महादेवं वादय-
न्तश्च किंनराः ॥ १५ ॥ नृत्यन्त्यप्सरसश्चैव स्तुवन्तो मुनयश्च तम् ॥ गन्धर्वा यान्ति देवेशं त्रिणेत्रं शूलपाणिनम् ॥१६॥ एका-
दश तथा कोट्यो रुद्राणां तत्र वै ययुः ॥ द्वादशैवादितेयानामष्टौ कोट्यो वसूनपि ॥ १७ ॥ सप्तषष्टिस्तथा कोट्यो गणाना-
मृषिसत्तमाः ॥ चतुर्विंशत्तदा जग्मुर्गणानामूर्ध्वरेतसाम् ॥ १८ ॥ असंख्यातानि यूथानि यक्षकिन्नररक्षसाम् ॥ अनुजग्मुर्महेशानं
विवाहाय समाकुलाः ॥ १९ ॥ ततः क्षणेन देवेशः क्ष्माधराधिपतेस्तलम् ॥ संप्राप्तश्चागमञ्छैलाः कुञ्जरस्थाः समन्ततः
॥ २० ॥ ततो ननाम भगवांस्त्रिणेत्रः स्थावराधिपम् ॥ शैलाः प्रणेमुरीशानं ततोऽसौ मुदितोऽभवत् ॥ २१ ॥ समं सुरैः पार्ष-
देश्च विवेश वृषकेतनः॥नन्दिना दर्शिते मार्गे शैलराजपुरं महत्॥२२॥जीमूतकेतुरायात इत्येवं नगरस्त्रियः ॥ निजकर्म परित्यज्य

दर्शनायादृताभवन् ॥२३॥ माल्यदाम समादाय करेणैकेन भामिनी ॥ केशपाशं द्वितीयेन शंकराभिमुखी गता ॥ २४ ॥ अन्या ऽलक्तकरागाढ्यं पादं कृत्वाऽऽकुलेक्षणा ॥ अनलक्तकमेकं हि हरं द्रष्टुमुपागता ॥ २५ ॥ एकेनाक्ष्णाऽञ्जितेनैव श्रुत्वा भीममुपागतम् ॥ साञ्जनां च प्रगृह्यान्या शलाकां सुष्ठु धावति ॥२६॥ अन्या सरशनं वासः पाणिनाऽऽदाय सुन्दरी ॥ उन्मत्तेवागमन्नग्ना हरदर्शनलालसा ॥२७॥ अन्याऽतिक्रान्तमीशानं श्रुत्वा स्तनभरालसा ॥ अनिन्दत कुचौ बाला यौवनं स्व कृशोदरी ॥ २८ ॥ इत्थं स नागरस्त्रीणां क्षोभं संजनयन्हरः ॥ जगाम वृषभारूढो दिव्यं श्वशुरमन्दिरम् ॥ २९ ॥ ततः प्रविष्टं प्रसमीक्ष्य शंभुं शैलेन्द्रवेश्मन्यबला ब्रुवन्ति ॥ स्थाने तपो दुश्चरमम्बिकायाश्चीर्णं महानेष सुरस्तु शंभुः॥३०॥ स एष येनाङ्गमनङ्गतां कृतं कन्दर्पनाम्नः कुसुमायुधस्य ॥ क्रतोः क्षयी दक्षविनाशकर्त्ता भगाक्षिहा शूलधरः पिनाकी ॥ ३१ ॥ नमो नमः शंकर शूलपाणे मृगारिचर्माम्बर कालशत्रो ॥ महाहिहाराङ्कितकुण्डलाय नमो नमः पार्वतिवल्लभाय ॥ ३२ ॥ इत्थं संस्तूयमानः सुरपतिविधृतेनातपत्रेण शंभुः सिद्धैर्वन्द्यः सपक्षैरहिकृतवलयी चारुभस्मोपलिप्तः ॥ अग्रस्थेनाग्रजेन प्रमुदितमनसा विष्णुना चानुगेन वैवाहीं मङ्गलाढ्यां हुतवहसहितामारुरोहाथ वेदीम् ॥ ३३ ॥ आयाति त्रिपुरान्तके सहचरैः सार्धं च सप्तर्षिभिर्व्यग्रोऽभूद्गिरिराजवेश्मनि जनः कन्यासमालंकृतौ ॥ व्याकुल्यं समुपागताश्च गिरयः पूजादिना देवताः प्रायो व्याकुलिता भवन्ति सुहृदः कन्याविवाहोत्सुकाः ॥३४॥ प्रसाध्य देवीं गिरिजां ततः स्त्रियो दुकूलशुक्लाभिवृताङ्गयष्टिकाम् ॥ भ्रात्रा सुनाभेन तदोत्सवे कृते सा शंकराभ्या-

शमथोपपादिता ॥३५॥ ततः शुभे हर्म्यतले हिरण्मये स्थिताः सुराः शंकरकालिचेष्टितम्॥ पश्यन्ति देवोऽपि समं कृशाङ्ग्या लोकानु-
जुष्टं पदमाससाद॥३६॥ यत्र क्रीडा विचित्राः सकुसुमतरवो वारिणो बिन्दुपातैर्गन्धाढ्यैर्गन्धचूर्णैः प्रविरलमवनौ गुण्ठितौ गुण्डिका-
यास्॥मुक्तादामैः प्रकामं हरगिरितनयाक्रीडनार्थं तदाग्नन्पश्चात्सिन्दूरपुञ्जैरविरतविततैश्चक्रतुः क्ष्मां सुरक्ताम्॥३७॥एवं क्रीडां
हरः कृत्वा समं च गिरिकन्यया॥आगच्छद्दक्षिणां वेदिमृषिभिः सेवितां दृढाम्॥३८॥अथाजगाम हिमवाञ्शुक्लाम्बरधरः शुचिः ॥
पवित्रपाणिरादाय मधुपर्कमथाकुलम्॥३९॥उपविष्टस्त्रिणेत्रस्तु शाक्रीं दिशमपश्यत ॥ सप्तर्षिकांश्च शैलेन्द्रः सूपविष्टो विलोकयन् ॥
॥४०॥ सुखासीनस्य शर्वस्य कृताञ्जलिपुटो गिरिः ॥ प्रोवाच वचनं श्रीमान्धर्मसाधनमात्मनः ॥४१॥[हिमवानुवाच ॥] मत्पुत्रीं
भगवन्कालीं पौत्रीं च पुलहाग्रजे ॥ पितॄणामपि दौहित्रीं प्रतीच्छेमां मयोदिताम् ॥४२॥[पुलस्त्य उवाच ॥] इत्येवमुक्त्वा शैलेन्द्रो
हस्तं हस्तेन योजयन् ॥ प्रादात्प्रतीच्छ भगवन्निदमुच्चैरुदीरयन् ॥४३॥[हर उवाच ॥] न मेऽस्ति माता न पिता तथैव न ज्ञातयो
वाऽपि च बान्धवाद्याः ॥ निराश्रयोऽहं गिरिशृङ्गवासी सुतां प्रतीच्छामि तवाद्रिराज ॥ ४४॥ इत्येवमुक्त्वा वरदोऽवपीडयत्करं
करेणाद्रिकुमारिकायाः ॥ सा चापि संस्पर्शमवाप्य शंभोः परां मुदं लब्धवती सुरर्षे ॥ ४५ ॥ तथाऽधिरूढो वरदोऽथ वेदिं सहा-
द्रिपुत्र्या मधुपर्कमश्नन् ॥ दत्त्वा च लाजान्कलमस्य शुक्लांस्ततो विरञ्ची गिरिजामुवाच ॥४६॥ कालि पश्येशवदनं रम्यं शशध-
रप्रभम्॥ समदृष्टिः स्थिरा भूत्वा कुरुष्वाग्नेः प्रदक्षिणाम् ॥४७॥ ततोऽम्बिका हरमुखे दृष्टे शैत्यमुपागता ॥ यथाऽर्करश्मिसंतप्ता

प्राप्य वृष्टिमिवावनी ॥ ४८ ॥ भूयः प्राह विभोर्वक्त्रमीक्षस्वेति पितामहः ॥ लज्जया साऽपि दृष्टेति शनैर्ब्रह्माणमब्रवीत् ॥ ४९ ॥
समं गिरिजया तेन हुताशाग्निः प्रदक्षिणम् ॥ कृतो लाजाश्च हविषा समं क्षिप्ता हुताशने ॥५०॥ ततो हराङ्घ्रिर्मालिन्या गृहीतो
दायकारणात् ॥ किं याचसे ते दास्यामि मुञ्चस्वेति हरोऽब्रवीत् ॥ ५१ ॥ मालिनी शंकरं प्राह मत्सख्या देहि शंकर ॥ सौभाग्यं
निजगोत्रीयं ततो मोक्षमवाप्स्यसि ॥५२॥ अथोवाच महादेवो दत्तं मालिनि मुञ्च माम् ॥ सौभाग्यं निजगोत्रीयं योऽस्यास्तं शृणु
वच्मि ते ॥ ५३ ॥ योऽसौ पीताम्बरधरः शङ्खधृङ् मधुसूदनः ॥ एतदीयं हि सौभाग्यं दत्तं मद्गोत्रमेव हि ॥५४॥ इत्येवमुक्ते व-
चने प्रमुमोच वृषध्वजम् ॥ मालिनी निजगोत्रस्य शुभचारित्रमालिनी ॥ ५५ ॥ यदा हरो हि मालिन्या गृहीतश्चरणे शुभे ॥
तदा कालीमुखं ब्रह्मा ददर्श शशिनोऽधिकम् ॥ ५६ ॥ तद्दृष्ट्वा मोहमगमच्छुक्रच्युतिमवाप च ॥ तच्छुक्रं वालुकायां च खिलीचक्रे
ससाध्वसः ॥ ५७ ॥ ततोऽब्रवीद्धरो ब्रह्मन्न द्विजान्हन्तुमर्हसि ॥ अमी महर्षयो धन्या वालखिल्याः पितामह ॥ ५८ ॥ ततो
महेशवाक्यान्ते समुत्तस्थुस्तपस्विनः ॥ अष्टाशीतिसहस्राणि वालखिल्या इति स्मृताः॥५९॥ ततो विवाहे निर्वृत्ते प्रविष्टः कौतुकं
हरः ॥ रेमे सहोमया रात्रिं प्रभाते पुनरुत्थितः ॥ ६० ॥ ततोऽद्रिपुत्रीं समवाप्य शंभुः सर्वैः समं भूतगणैश्च हृष्टः ॥ संपूजि-
तः पर्वतपार्थिवेन स्वमन्दिरं शीघ्रमुपाजगाम ॥ ६१ ॥ ततः सुरान्ब्रह्महरीन्द्रमुख्यान्प्रणम्य संपूज्य यथाविभागम् ॥विसृज्य भूतैः
सहितो महीध्रमध्यावसन्मन्दरमष्टमूर्तिः ॥६२॥ [इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे उमासंभवे गौरीविवाहो नाम त्रिपञ्चाश-

त्तमोऽध्यायः]॥९३॥[पुलस्त्य उवाच ॥]ततो गिरौ वसन्रुद्रः स्वेच्छया विचरन्मुने ॥ विश्वकर्माणमाहूय अवोचत्कुरु मे गृहम्॥ ॥ १ ॥ ततश्चकार शर्वस्य गृहं स्वस्तिकलक्षणम् ॥ योजनानि चतुःषष्टिः प्रमाणेन हिरण्मयम् ॥२॥ दन्ततोरणनिर्व्यूहं मुक्ताजालान्तरं शुभम् ॥ शुद्धस्फटिकसोपानं वैडूर्यकृतरूपकम् ॥ ॥ ३ ॥ सप्तकक्षं सुविस्तीर्णं सर्वं समुदितं गुणैः ॥ ततो देवपतिश्चक्रे यज्ञं गार्हस्थ्यलक्षणम् ॥ ४ ॥ तं पूर्वचरितं मार्गमनुयाति स्म शङ्करः ॥ तथा सतस्त्रिणेत्रस्य महान्कालोऽभ्यगान्मुने ॥ ५ ॥ रमतः सह पार्वत्या धर्मापेक्षी जगत्पतिः ॥ ततः कदाचिद्रह्मार्थं कालीत्युक्ता भवेन हि ॥ ६ ॥ पार्वती मन्युनाऽऽविष्टा शंकरं वाक्यमब्रवीत् ॥ संरोहतीषुणा विद्धं वनं परशुना हतम् ॥ वाचा दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम् ॥ ७ ॥ वाक्सायका वदनान्निष्पतन्ति तैराहतः शोचति राज्यहानि ॥ न तान्विमुञ्चेत हि पण्डितो जनस्तदद्य धर्मं वितथं त्वया कृतम् ॥ ८॥तस्माद्व्रजामि देवेश तपस्तप्तुमनुत्तमम् ॥ तथा यतिष्ये न यथा भवान्कालीति वक्ष्यति ॥ ९ ॥ इत्येवमुक्त्वा गिरिजा प्रणम्य च महेश्वरम् ॥ अनुज्ञाता त्रिणेत्रेण दिवमेवोत्पपात ह ॥ १० ॥ समुत्पत्य च वेगेन हिमाद्रेः शिखरं शिवम् ॥ टङ्कच्छिन्नं प्रयत्नेन विधात्रा निर्मितं यथा ॥ ११ ॥ ततोऽवतीर्य सस्मार जयां च विजयां तथा ॥ जयन्तीं च महापुण्यां चतुर्थीमपराजिताम् ॥ १२ ॥ ताः संस्मृताः समाजग्मुः कालीं द्रष्टुं हि देवताः ॥ अनुज्ञातास्तथा देव्याः शुश्रूषां चक्रिरे शुभाः ॥ १३ ॥ ततस्तपसि पार्वत्यां स्थितायां हिमवद्वनात् ॥ समाजगाम तं देशं व्याघ्रो दंष्ट्रानखायुधः ॥ १४ ॥ एकपादस्थितायां वै देव्यां व्याघ्रस्त्वचिन्तयत् ॥ यदा पति-

ष्यते चेयं तदा दास्यामि वै अहम् ॥ १५ ॥ इत्येवं चिन्तयन्नेव दत्तदृष्टिर्मृगाधिपः ॥ पश्यमानस्तद्वदनमेकदृष्टिरजायत ॥१६॥
ततो वर्षशतं देवी गृणन्ती ब्रह्मणः पदम् ॥ तपोऽतप्यत्ततोऽभ्यागाद्ब्रह्मा त्रिभुवनेश्वरः ॥ १७ ॥ पितामहस्तथोवाच देवीं प्रीतोऽस्मि
शाश्वते ॥ तपसा धूतपापाऽसि वरं वृणु यथेप्सितम् ॥ १८ ॥ अथोवाच वचः काली व्याघ्रस्य कमलोद्भव ॥ वरदो भव तेनाहं
यास्ये प्रीतिमनुत्तमाम् ॥१९॥ ततः प्रादाद्वरं ब्रह्मा व्याघ्रस्याद्भुतकर्मणः ॥ गाणपत्यं विभौ भक्तिमजेयत्वं च धर्मिताम् ॥२०॥
वरं व्याघ्राय दत्त्वैवं शिवकान्तामथाब्रवीत् ॥ वृणीष्व वरमव्यग्रा वरं दास्ये तवाम्बिके ॥ २१ ॥ ततो वरं गिरिसुता प्राह देवी
पितामहम् ॥ वरः प्रदीयतां ब्रह्मन्वर्णं कनकसंनिभम् ॥ २२ ॥ तथेत्युक्त्वा गतो ब्रह्मा पार्वती चाभवत्ततः ॥ कोशं कृष्णं परि-
त्यज्य पद्मकिञ्जल्कसन्निभा ॥ २३ ॥ तस्मात्कोशाच्च सा जाता भूयः कात्यायनी मुने ॥ तामभ्येत्य सहस्राक्षः प्रतिजग्राह दक्षि-
णाम् ॥ प्रोवाच गिरिजां देवो वाक्यं स्वर्गाय वासवः ॥२४ ॥[ इन्द्र उवाच ]॥ इयं प्रदीयतां मह्यं भगिनी मेऽस्तु कौशिकी ॥
त्वत्कोशसंभवा चेयं कौशिकी कौशिकोऽप्ययम् ॥ २५ ॥ तां प्रादादिति संश्रुत्य कौशिकीं रूपसंयुताम् ॥ सहस्राक्षोऽपि तां
गृह्य विन्ध्यं वेगाज्जगाम च ॥ २६ ॥ तत्र गत्वा त्वथोवाच तिष्ठ चात्र महाचले ॥ पूज्यमाना सुरैर्नाम्ना ख्याता त्वं विन्ध्यवा-
सिनी ॥ २७ ॥ तत्र स्थाप्य हरिर्देवीं दत्त्वा सिंहं च वाहनम् ॥ भवामरारिहन्त्री चेत्युक्त्वा स्वर्गमुपागमत् ॥ २८ ॥ उमाऽपि
तं वरं लब्ध्वा मन्दिरं पुनरेत्य च ॥ प्रणम्य च महेशानं स्थिता सविनयं मुने ॥ २९ ॥ ततोऽमरगुरुः श्रीमान्पार्वत्या सहितो

ऽव्ययः ॥ तस्थौ वर्षसहस्रं हि महामोहनके मुने ॥३०॥ महामोहस्थिते रुद्रे भुवनाश्चेलुरुद्धताः ॥ चुक्षुभुः सागराः सप्त देवाश्च भयमागमन् ॥ ३१ ॥ ततः सुरा महेन्द्रेण ब्रह्मणः सदनं गताः ॥ प्रणम्योचुर्महेशानं जगत्क्षुब्धं तु किं त्विदम् ॥ ३२ ॥ तानुवाच भवो नूनं महामोहनके स्थितः ॥ तेनाक्रान्तास्त्विमे लोका जग्मुः क्षोभं दुरत्ययम् ॥ ३३ ॥ इत्युक्त्वा सोऽभवत्तूष्णीं ततोऽप्यूचुः सुरा हरिम् ॥ आगच्छ शक्र गच्छामो यावत्तन्न समाप्यते ॥ ३४ ॥ समाप्ते मोहने बालो यः समुत्पत्स्यतेऽव्ययः ॥ स नूनं देवराजस्य पदमैन्द्रं हरिष्यति ॥ ३५ ॥ ततोऽमराणां वचनाद्दिवौकोबलघातिनः ॥ भयाज्ज्ञानं ततो नष्टं भाविकर्मप्रचोदनात् ॥ ३६ ॥ ततः शक्रः सुरैः सार्धं वह्निना च सहस्रदृक् ॥ जगाम मन्दरगिरिं तच्छृङ्गेष्वपि सत्तम ॥ ३७ ॥ अशक्ताः सर्व एवैते प्रवेष्टुं तद्भवाजिरम् ॥ चिन्तयित्वा तु सुचिरं पावकं ते व्यसर्जयन् ॥ ३८ ॥ स चाभ्येत्य सुरश्रेष्ठो दृष्ट्वा द्वारे च नन्दिनम् ॥ दुष्प्रवेशं च तं दृष्ट्वा चिन्तां वह्निः परां गतः॥३९॥स तु चिन्तार्णवे मग्नः प्रापश्यच्छंभुसद्मनः॥निष्क्रामन्तीं महापङ्क्तिं हंसानां विमलां तथा॥४०॥ असावुपाय इत्युक्त्वा हंसरूपी हुताशनः ॥ वञ्चयित्वा प्रतीहारं प्रविवेश हराजिरम्॥४१॥प्रविश्य सूक्ष्ममूर्त्तिश्च शिरोदेशे कपर्दिनः ॥ प्राह प्रहस्य गम्भीरं देवा द्वारि स्थिता इति ॥४२॥ तच्छ्रुत्वा सहसोत्थाय परित्यज्य गिरेः सुताम् ॥ विनिष्क्रान्तोऽजिराच्छर्वो वह्निना सह नारद ॥४३॥ विनिष्क्रान्ते सुरपतौ देवा मुदितमानसाः ॥ शिरोभिरवनीं जग्मुः सेन्द्रार्कशशि-

पावकाः ॥४४॥ ततः प्रीत्या सुरानाह वदध्वं कार्यमाशु मे ॥ प्रणामावनता वो हि दास्येऽहं वरमुत्तमम् ॥४५॥[देवा ऊचुः ॥] यदि तुष्टोऽसि देवानां वरं दातुमिहेच्छसि ॥ तदिह त्यज्यतां तावन्महामैथुनमीश्वर ॥ ४६ ॥[ईश्वर उवाच ॥] एवं भवतु संत्यक्तो मया भावोऽमरोत्तमाः ॥ ममेदं तेज उद्रिक्तं कश्चिदेव प्रतीच्छतु॥ ४७॥[पुलस्त्य उवाच ॥] इत्युक्ताः शंभुना देवाः सेन्द्रचन्द्रदिवाकराः॥ असीदन्त यथा मग्नाः पङ्के गावस्तथा सुराः ॥४८॥ सीदत्सु देवतेष्वेवं हुताशोऽभ्येत्य शंकरम् ॥ प्रोवाच मुञ्च तेजस्त्वं प्रतीच्छाम्येव शंकर ॥४९॥ ततो मुमोच भगवांस्तद्रेतः स्कन्नमेव तु ॥ जलं तृषार्तो वै यद्वत्तैलपानं पिपासितः ॥५०॥ततः पीते रेतसि वै शार्वे देवेन वह्निना ॥ स्वस्थाः सुराः समामन्त्र्य हरं जग्मुस्त्रिविष्टपम् ॥ ५१ ॥ संप्रयातेषु देवेषु हरोऽपि निजमन्दिरम् ॥ सम्भ्येत्य महादेवीमिदं वचनमब्रवीत् ॥५२॥ देवि देवैरिहाभ्येत्य यत्नात्प्रेष्य हुताशनम् ॥ ततः प्रोक्तो निषिद्धस्तु पुत्रोत्पत्तिं तवोदरात् ॥५३॥ साऽपि भर्तुर्वचः श्रुत्वा क्रुद्धा रक्तान्तलोचना ॥ शशाप देवताः सर्वा नष्टपुत्रोद्भवा शिवा ॥ ५४ ॥ यस्मान्नेच्छन्ति ते दुष्टा मम पुत्रं ममौरसम् ॥ तस्मात्ते न जनिष्यन्ति स्वासु योषित्सु पुत्रकान् ॥ ५५ ॥ एवं शप्त्वा सुरान्गौरी शौचशालामुपागमत् ॥ आहूय मालिनीं स्नातुं मतिं चक्रे तपोधन ॥ ५६ ॥ मालिनी सुरभिं गृह्य श्लक्ष्णमुद्वर्तनं शुभा ॥ देव्यङ्गमुद्वर्तयते कराभ्यां कनकप्रभा ॥ ५७ ॥ तच्छौचं पार्वती नैवं मेने कीटगुणेन हि ॥ उद्वर्त्य पार्वतीं तां तु शुभेनोद्वर्तनेन च ॥५८॥ मालिनी तूर्णमगमद्गृहं स्नानस्य कारणात् ॥ तस्यां गतायां शैलेयी मलाच्चक्रे गजाननम् ॥ ५९ ॥ चतुर्भुजं पीनवक्षं पुरुषं लक्षणान्वितम् ॥

कृत्वोत्ससर्ज तं भूम्यां स्थिता भद्रासने पुनः ॥६०॥ मालिनी तच्छिरःस्नानं ददौ विहसती तदा ॥ ईषद्धासमुखीं दृष्ट्वा मालिनीं
प्राह नारद ॥ ६१ ॥ किमर्थं भीरु शनकैर्हससि त्वमतीव च ॥ साऽथोवाच हसाम्येवं भवत्यास्तनयः किल ॥ ६२ ॥ भविष्यती-
ति देवेन प्रोक्तो नन्दिगणाधिपः ॥ तच्छ्रुत्वा मम हासोऽयं संजातोऽद्य कृशोदरि ॥ ६३ ॥ यस्माद्देवी पुत्रकामाच्छंकरो विनिवा-
रितः ॥ एतच्छ्रुत्वा वचो देवी सस्नौ तत्र विधानतः ॥६४॥ स्नात्वाऽर्च्य शंकरं भक्त्या समभ्यागाद् गृहं प्रति ॥ ततः शंभुः समा-
गत्य तस्मिन्भद्रासनेऽपि च ॥६५॥ स्नातस्तस्य ततस्तस्मात्स्थितः स मलपूरुषः॥उमास्वेदभवस्वेदं जलभूमिसमन्वितम् ॥ ६६ ॥
तत्संपर्कात्समुत्तस्थौ फूत्कृत्य करमुत्तमम् ॥ अपत्यं हि विदित्वा च प्रीतिमान्भुवनेश्वरः ॥ ६७ ॥ तं चादाय हरो नन्दिमुवाच
भगनेत्रहा ॥ रुद्रः स्नात्वाऽर्च्य देवादीन्वाऽद्भिरग्निं पितॄनपि ॥६८॥जप्त्वा सहस्रनामानमुमापार्श्वमुपागतः ॥ समेत्य देवीं विह-
सन्शंकरः शूलधृग्वचः ॥ ६९ ॥ प्राह त्वं पश्य शैलेयि त्वत्सुतं गुणसंयुतम् ॥ इत्युक्ता पर्वतसुता ह्युपेत्यापश्यदद्भुतम् ॥ ७० ॥
यस्त्वदङ्गमलाद्दिव्यः कृतो गजमुखो नरः ॥ ततः प्रीता गिरिसुता तं पुत्रं परिषस्वजे ॥ ७१ ॥ मूर्ध्नि चैनमुपाघ्राय ततः शर्वो
ऽब्रवीदुमाम् ॥ नायकेन विना देवि मया भूतोऽपि पुत्रकः ॥७२॥ यस्माज्जातस्ततो नाम्ना भविष्यति विनायकः ॥ एष विघ्नसह-
स्राणि देवादीनां हनिष्यति ॥ ७३ ॥ पूजयिष्यन्ति देवाश्च देवि लोकाश्चराचराः ॥ इत्येवमुक्त्वा देव्यास्तु दत्तवांस्तनयं स हि ॥१८०॥
॥ ७४ ॥ सहायं तु गणश्रेष्ठं नाम्ना ख्यातं घटोदरम् ॥ तथा मातृगणा घोरा भूता विघ्नकराश्च ये ॥ ७५ ॥ ते सर्वे परमेशेन दे-

न्याः प्रीत्योपपादिताः ॥ देवी च तं सुतं दृष्ट्वा परां मुदमवाप च ॥७६॥ रेमेऽथ शंभुना सार्द्धं मन्दिरे चारुकन्दरे ॥ एवं भूयो ऽभवद्देवी इयं कात्यायनी विभो ॥ या जघान महादैत्यौ पुरा शुम्भनिशुम्भकौ ॥ ७७ ॥ एतत्तवोक्तं वचनं सुभाष्यं यथोद्भवः पर्वततो मृडान्याः ॥ स्वर्ग्यं यशस्यं च तथाऽघहारि आख्यानमूर्ज्जस्करमद्रिपुत्र्याः ॥ ७८॥ [इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे उमासंभवे विनायकोत्पत्तिर्नाम चतुष्पञ्चाशत्तमोऽध्यायः]॥ ५४ ॥ [पुलस्त्य उवाच ॥] कश्यपस्य दनुर्नाम्ना भार्याऽऽसीद्द्विज-सत्तम ॥ तस्याः पुत्रत्रयं चासीत्सहस्राक्षाद्बलाधिकम् ॥१॥ ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः ॥ तृतीयो नमुचिर्नाम महाबलसमन्वितः ॥ २ ॥ योऽसौ नमुचिरित्येवं ख्यातो दनुसुतोऽसुरः ॥ तं हन्तुमिच्छति हरिः प्रगृह्य कुलिशं करे ॥ ३ ॥ त्रिदिवेशं समायान्तं नमुचिस्तु भयादथ ॥ प्रविवेश रथं भानोस्ततो नाशकदच्युतः ॥ ४ ॥ शक्रस्तेनाथ समयं प्रचक्रे स महामनाः ॥ अवध्यत्वं वरं प्रादाच्छस्त्रैरस्त्रैश्च नारद ॥ ५ ॥ ततोऽवध्यत्वमाज्ञाय शस्त्रैरस्त्रैश्च नारदः ॥ संत्यज्य भास्कररथं पातालमुदयादथ ॥ ६ ॥ स निमज्जन्नपि जले सामुद्रं फेनमुत्तमम् ॥ ददृशे दानवपतिस्तं प्रगृह्येदमब्रवीत् ॥ ७ ॥ यदुक्तं देवपतिना वासवेन वचोऽस्तु तत् ॥ अयं स्पृशतु मां फेनः कराभ्यां गृह्य दानवः ॥ ८ ॥ मुखनासादिकर्णा-दीन्समापूर्य यथेच्छया ॥ तस्मिञ्छक्रोऽसृजद्वज्रमन्तर्हितमपीश्वरः॥९॥ तेनासौ रुद्धनासास्यः पपात च ममार च ॥समये च तथा नष्टे ब्रह्महत्याऽस्पृशद्धरिम् ॥ १० ॥ स चैतत्तीर्थमासाद्य स्नातः पापादमुच्यत ॥ ततोऽस्य भ्रातरौ वीरौ क्रुद्धौ शुम्भनिशुम्भकौ

॥ ११ ॥ उद्योगं सुमहत्कृत्वा सुरान्बाधितुमागतौ ॥ सुरास्तेऽपि सहस्राक्षं पुरस्कृत्य विनिर्ययुः ॥ १२ ॥ जितास्त्वाक्रम्य दैत्या-
भ्यां सबलाः सपदानुगाः ॥ शक्रस्याहृत्य च गजं याम्यं च महिषं बलात् ॥१३॥ वरुणस्य मणिं छत्रं गदां वै माधवस्य च ॥
निधयः शङ्खपद्माद्या हृतास्त्वाक्रम्य दानवैः ॥१४॥ त्रिलोकी वशगा चास्तेऽनयोर्नारद दैत्ययोः ॥ आजग्मतुर्महीपृष्ठं ददृशाते
महासुरम् ॥ १५ ॥ रक्तबीजमथोचुस्ते को भवानिति सोऽब्रवीत् ॥ स चाह दैत्योऽस्मि विभो सचिवो महिषस्य तु ॥ १६ ॥
रक्तबीजेति विख्यातो महावीर्यो महाभुजः॥ अमात्यौ रुचिरौ वीरौ चण्डमुण्डाविति श्रुतौ॥१७॥तावास्तां सलिले मग्नौ भयाद्देव्या
महाभुजौ ॥ यस्त्वासीत्प्रभुरस्माकं महिषो नाम दानवः ॥ १८ ॥ निहतः स महादेव्या विन्ध्यशैले सुविस्तृते ॥ भवन्तौ कस्य
तनयौ किं वा नाम्ना परिश्रुतौ ॥ किंवीर्यौ किंप्रभावौ च एतच्छंसितुमर्हथः॥१९॥ शुम्भनिशुम्भावूचतुः ॥ अहं शुम्भ इति ख्या-
तो दनोः पुत्रस्तथौरसः ॥ निशुम्भोऽयं मम भ्राता कनीयाञ्छक्रदर्पहा ॥२०॥ अनेन बहुशो देवाः सेन्द्ररुद्रदिवाकराः ॥ समेत्य
निर्जिता वीरा ये चान्ये बलवत्तराः॥२१॥तदुच्यतां कथं दैत्यो निहतो महिषासुरः॥यावत्तान्घातयिष्यावः स्वसैन्यपरिवारितौ॥
॥ २२ ॥ इत्थं तयोस्तु वदतोर्नर्मदायास्तटे मुने ॥ जलवासाद्विनिष्क्रान्तौ चण्डमुण्डौ च दानवौ ॥२३॥ ततोऽभ्येत्यासुरश्रेष्ठौ
रक्तबीजं समाश्रितौ ॥ ऊचतुर्वचनं श्लक्ष्णं कोऽयं तव पुरस्सरः ॥ २४ ॥ स चोभौ प्राह दैत्योऽसौ शुम्भो नाम सुरार्दनः ॥ कनी-
यानस्य च भ्राता द्वितीयो हि निशुम्भकः ॥ २५ ॥ एतावाश्रित्य तां दुष्टां महिषघ्नीं न संशयः ॥ अहं विवाहयिष्यामि रत्न-

श्रीमानुपमन्युरिति श्रुतः ॥ ५ ॥ तं माता मुनिशार्दूलं शालिपिष्टरसेन वै ॥ पोषयामास ददती क्षीरमेतद्धि दुर्गता ॥६॥ सोऽजाना-
नोऽस्य क्षीरस्य स्वादुतां पय इत्यथ ॥ संभावनामप्यकरोच्छालिपिष्टरसेऽपि हि ॥ ७ ॥ स त्वेकदा समं पित्रा कुत्रचिद्द्विजवेश्म-
नि ॥ क्षीरौदनं च बुभुजे श्रद्धया प्राणिपुष्टिदम् ॥ ८ ॥ स लब्ध्वाऽनुपमं स्वादु क्षीरं च ऋषिपुत्रकः ॥ मात्रा दत्तं द्वितीयेऽह्नि
नादत्ते पिष्टकारितम् ॥९॥ रुरोद च तथा बाल्यात्पयोऽर्थं चातको यथा ॥ माता रुदन्तं तं प्राह बाष्पगद्गदया गिरा ॥ १० ॥
उमापतौ पशुपतौ शूलधारिणि शंकरे ॥ अप्रसन्ने विरूपाक्षे कुतः क्षीरेण भोजनम् ॥११॥ यदीच्छसि पयो भोक्तुं सद्यः पुष्टिकरं
सुत ॥ तमाराधय देवेशं विरूपाक्षं त्रिशूलिनम् ॥ १२ ॥ तस्मिंस्तुष्टे जगद्धाम्नि सर्वकल्याणदायिनि ॥ प्राप्यतेऽमृतपायित्वं किं
पुनः क्षीरभोजनम् ॥ १३ ॥ स मातुर्वचनं श्रुत्वा वीतमन्युस्ततोऽब्रवीत् ॥ कोऽयं विरूपाक्ष इति त्वयाऽऽराध्यस्तु कीर्तितः
॥ १४ ॥ ततः सुतं धर्मशीला धर्माढ्यं वाक्यमब्रवीत् ॥ १५ ॥ योऽयं विरूपाक्ष इति श्रूयतां कथयामि तम् ॥ आसीन्महासुरप-
तिः श्रीदाम इति विश्रुतः ॥ १६ ॥ येनाक्रम्य जगत्सर्वं श्रीदाम्ना विष्णुवत्पुरा ॥ १७ ॥ निःश्रीकास्तु त्रयो लोकाः कृतास्तेन दुरा-
त्मना ॥ श्रीवत्सं वासुदेवस्य हर्तुमिच्छन्महासुरः ॥ १८ ॥ तस्य दुष्टं स भगवानभिप्रायं जनार्दनः ॥ज्ञात्वा तस्य वधकाङ्क्षी
महेश्वरमुपागमत् ॥ १९ ॥ एतस्मिन्नन्तरे शंभुर्योगमूर्तिधरोऽव्ययः ॥तस्थौ हिमाचलप्रस्थमाश्रित्य श्लक्ष्णभूषितम् ॥ २० ॥ अथा-
भ्येत्य जगन्नाथः सहस्रशिरसं विभुम् ॥ आराधयामास हरिः स्वयमात्मानमात्मना ॥२१॥ आसीद्वर्षसहस्रं तु पादाङ्गुष्ठेन तद्गिरा॥

गृणन्सनातनं ब्रह्म योगिध्येयमलक्षणम् ॥२२॥ ततः प्रीतः प्रभुः प्रादाद्विष्णवे परमं पदम् ॥ प्रत्यक्षतेजसा युक्तं दिव्यं चक्रं
सुदर्शनम् ॥ २३॥ तद्दत्त्वा देवदेवाय सर्वभूतमयः प्रभुः ॥ कालचक्रनिभं चक्रं शंकरो विष्णुमब्रवीत् ॥ २४ ॥ वरायुधं हि देवेश
सर्वायुधनिबर्हणम् ॥ सुदर्शनं द्वादशारं षण्णाभि द्विजवज्जवे ॥२५॥ आरासंस्थास्त्वमी तत्र देवा मासाश्च राशयः ॥ शिष्टानां
रक्षणार्थाय संस्थिता ऋतवश्च षट् ॥ २६ ॥ अग्निः सोमस्तथा मित्रो वरुणश्च शचीपतिः ॥ इन्द्राग्नी वाऽप्यथो विश्वे प्रजापतय
एव तु ॥ २७ ॥ वायुश्च बलवान्देववैद्यौ धन्वन्तरिस्तथा ॥ तपस्यश्च तपश्चोग्रो द्वादशेति प्रतिष्ठिताः ॥ २८ ॥ चैत्राद्याः
फाल्गुनान्ताश्च मासास्तत्र प्रतिष्ठिताः ॥ २९ ॥ तदेनदादाय विभो रथायुधं शत्रुं सुराणां जहि मा विशाङ्किथाः ॥ अमोघ एषो-
ऽमरराजपूजितो धृतो मया मन्त्रगतस्तपोबलात् ॥ ३० ॥ इत्युक्तः शंभुना विष्णुस्ततो वचनमब्रवीत् ॥ कथं शंभो विजानीया-
ममोघं मोघमेव च ॥ ३१ ॥ यथाऽमोघं विभो चक्रं सर्वत्राप्रतिमं ततः ॥ जिज्ञासार्थं तवैवेह प्रेक्षिष्यामि प्रतीच्छ मे ॥ ३२ ॥
तद्वाक्यं वासुदेवस्य निशम्याह पिनाकधृक् ॥ यद्येवं प्रक्षिपस्वेति निर्विशङ्केन चेतसा ॥ ३३ ॥ तन्महेशानवचनं श्रुत्वा विष्णुः
सुदर्शनम् ॥ मुमोच तेजो जिज्ञासुः शंकरं प्रति वेगवान् ॥ ३४ ॥ मुरारिकरविभ्रष्टं चक्रमभ्येत्य शूलिनम् ॥ त्रिधा चकार
विश्वेशं यज्ञेशं यज्ञयाजकम् ॥ ३५ ॥ हरं हरिस्त्रिधाभूतं दृष्ट्वा तूर्णं महाभुजः ॥ व्रीडोपप्लुतदेहस्तु प्रणिपातपरोऽभवत् ॥ ३६ ॥
पादप्रणामनिरतं वीक्ष्य दामोदरं ततः ॥ प्राह प्रीतमनाः श्रीमानुत्तिष्ठेति पुनः पुनः ॥ ३७ ॥ प्राकृतोऽयं महाभाग विकारो

ब्रह्मणो मम ॥ निकृत्तो न स्वभावो मे अच्छेद्योऽदाह्य एव हि ॥ ३८ ॥ तदेतानीह चक्रेण त्रीण्यङ्गानीह केशव ॥ कृत्तानि तानि पुण्यानि भविष्यन्ति न संशयः ॥ ३९ ॥ हिरण्याक्षस्ततो ह्येष सुवर्णाक्षस्तथाऽपरः ॥ तृतीयो विश्वरूपाक्षस्त्रयो मे पुण्यदा नृणाम् ॥ ४० ॥ उत्तिष्ठ गच्छ च विभो निहन्तुं च ममाहितम् ॥ श्रीदामानं हतं ज्ञात्वा नन्दयिष्यन्ति देवताः ॥ ४१ ॥ इत्येवमुक्तो भगवान्हरेण गरुडध्वजः ॥ गत्वा सुरगिरिप्रस्थं श्रीदामानं ददर्श ह ॥४२॥ तं दृष्ट्वा देवदर्पघ्नं दैत्यं देववरो हरिः ॥ मुमोच चक्रं वेगाढ्यं हतोऽसीति ब्रुवन्विभुः ॥ ४३ ॥ ततस्तु तेनाप्रतिपौरुषेण चक्रेण दैत्यस्य शिरो निकृत्तम् ॥ संछिन्नशीर्षो निपपात शैलाद्वज्राहतं शैलशिरो यथैव ॥ ४४ ॥ तस्मिन्हते देवरिपौ सुरारिरीशं समाराध्य विरूपनेत्रम् ॥ लब्ध्वा च चक्रं प्रवरं महायुधं जगाम देवो निलयं तपोनिधिम् ॥ ४५ ॥ सोऽयं पुत्र विरूपाक्षो देवदेवो महेश्वरः ॥ तमाराधय चेत्साधो क्षीरेणेच्छसि भोजनम् ॥ ४६ ॥ तन्मातुर्वचनं श्रुत्वा वीतमन्युः सुतो बली ॥ तमाराध्य विरूपाक्षं प्राप्स्ये क्षीरेण भोजनम् ॥ ४७ ॥ एतत्त्वयोक्तं परमं पवित्रं संछेदनं पापतरोर्मुरारेः ॥ तीर्थं च तत्रैव महासुरो वै समाससादाथ सुपुण्यहेतोः ॥ ४८ ॥ इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे श्रीदामचरितं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ पुलस्त्य उवाच ॥ ॥ तस्मिंस्तीर्थवरे स्नात्वा दृष्ट्वा देवं त्रिलोचनम् ॥ पूजयित्वा सुवर्णाक्षं नैमिषं प्रययौ ततः ॥ १ ॥ तत्र तीर्थसहस्राणि त्रिंशत्पापहराणि च ॥ गोमत्याः काञ्चनाक्ष्याश्च शुभदायाश्च मध्यतः ॥२॥ तेषु स्नात्वाऽर्च्य देवेशं पीतवाससमच्युतम् ॥

ऋषीनपि च संपूज्य नैमिषारण्यवासिनः ॥ ३ ॥ देवदेवं तथेशानं संपूज्य विधिना ततः ॥ गयायां गोपतिं द्रष्टुं जगाम स
महासुरः ॥ ४ ॥ स्नात्वा ब्रह्मतडागे तु कृत्वा चास्य प्रदक्षिणाम् ॥ पिण्डनिर्वपणं पुण्यं पितॄणां स चकार ह ॥ ५ ॥ उदपाने
तथा स्नात्वा तत्राभ्यर्च्य पितॄन्वशी ॥ गदापाणिं समभ्यर्च्य गोपतिं चापि शंकरम् ॥ ६ ॥ इन्द्रतीर्थे तथा स्नात्वा संतर्प्य पितृ-
देवताः ॥ महानदीजले स्नात्वा सरयूं च जगाम सः ॥ ७ ॥ तस्यां स्नात्वा समभ्यर्च्य गोप्रतारं कुशेशयम् ॥ उपोष्य रजनीमेकां
विनयावनतो ययौ ॥ ८ ॥ स्नात्वा चार्च्य रजस्तीर्थे दत्त्वा पिण्डं पितॄंस्तथा ॥ दर्शनार्थं ययौ श्रीमानजितं पुरुषोत्तमम् ॥९॥
तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः ॥ षड्रात्रं समुपोष्यैव महेन्द्रे दक्षिणं ययौ ॥ १० ॥ तत्र देववरं शुभ्रमर्धनारीधरं हरम् ॥
दृष्ट्वा च संपूज्य पितॄन्महेन्द्रे चोत्तरं गतः ॥ ११ ॥ तत्र देववरं शंभुं गोपालं सोमपीडितम् ॥ दृष्ट्वा स्नात्वा सोमतीर्थे सह्याचल-
मुपागतः ॥ १२ ॥ तत्र स्नात्वा महोदक्यां वैकुण्ठं चार्च्य भक्तितः ॥ सुरान्पितॄंश्च संतर्प्य पारियात्रं गिरिं गतः ॥ १३ ॥
तत्र स्नात्वा लाङ्गलिन्यां पूजयित्वाऽपराजितम् ॥ कशेरुदेशं चाभ्येत्य विश्वरूपं ददर्श सः ॥ १४ ॥ यत्र देववरः शंभुर्गणानां
तु सुपूजितः ॥ विश्वरूपमथात्मानं दर्शयामास योगवित् ॥ १५ ॥ तत्र मङ्कुरणिकातोये स्नात्वाऽभ्यर्च्य महेश्वरम् ॥ जगाम
नित्यसौगन्धं प्रह्लादो मलयाचलम् ॥ १६ ॥ महाह्रदे ततः स्नात्वा पूजयित्वा च शंकरम् ॥ ततो जगाम योगात्मा द्रष्टुं
विन्ध्ये सदाशिवम् ॥ १७ ॥ ततो विपाशासलिले स्नात्वाऽभ्यर्च्य सदाशिवम् ॥ त्रिरात्रं समुपोष्याथ अवन्तीं नगरीं ययौ ॥

॥१७३॥

॥ १८ ॥ तत्र क्षिप्राजले स्नात्वा विष्णुं संपूज्य भक्तितः ॥ श्मशानस्थं जगामाथ महाकालवपुर्धरम् ॥ १९ ॥ तस्मिन्न सर्व-
भूतानां तेन रूपेण शंकरः ॥ तामसं रूपमास्थाय संहारं कुरुते वशी ॥२०॥ तत्रस्थेन सुरेशेन श्वेतकिर्नाम भूपतिः ॥ रक्षितस्त्व-
न्तकं दग्ध्वा सर्वभूतापहारिणम्॥२१॥ तत्रातिहृष्टो वसति नित्यं वै सर्वदा भवः ॥ वृतः प्रमथकोटीभिस्त्रिदशार्चितविग्रहः ॥२२॥
तं दृष्ट्वाऽथ महाकालं कालकालान्तकान्तकम् ॥ यमसंयमनं मृत्योर्मृत्युं चित्रविचित्रकम् ॥२३॥ श्मशाननिलयं शंभुं भूतनाथं जगत्प
तिम् ॥ पूजयित्वा शूलधरं जगाम निषधान्प्रति॥२४॥ तत्रामरेश्वरं देवं दृष्ट्वा संपूज्य भक्तितः ॥ महोदयं समभ्येत्य हयग्रीवं ददर्श सः
॥२५॥ अश्वतीर्थे ततः स्नात्वा दृष्ट्वा च तुरगाननम् ॥ श्रीधरं च विभुं पूज्य पाञ्चालविषयं ययौ ॥ २६ ॥ तत्रेश्वरगुणैर्युक्तं पुत्रमर्थपते-
रथ ॥ पाञ्चलिंकं वशी दृष्ट्वा प्रयागं प्रयतो ययौ ॥२७॥प्रयागे शुभदे तीर्थे यामुने लोकविश्रुते ॥ दृष्ट्वा वटेश्वरं रुद्रं माधवं योगशा-
यिनम् ॥२८॥ द्वावेव भक्तिसंपूज्यौ पूजयित्वा महासुरः ॥ माघमासमथोपोष्य ततो वाराणसीं गतः॥२९॥समासाद्य च तां पुण्यां
तीर्थेषु च पृथक्पृथक् ॥ सर्वपापहरा ह्येषा स्नात्वाऽर्च्य पितृदेवताः ॥३०॥ प्रदक्षिणीकृत्य पुरीं संपूज्याभुक्तकेशवौ ॥ लोलं दिवा-
करं दृष्ट्वा ततो मधुवनं ययौ॥३१॥तत्र स्वायंभुवं देवं ददर्शासुरसत्तमः॥तमभ्यर्च्य महातेजाः पुष्करारण्यमागमत्॥ तेषु त्रिष्वपि
तीर्थेषु स्नात्वाऽर्च्य पितृदेवताः ॥ ३२ ॥ एतत्पवित्रं परमं पुराणं प्रोक्तं त्वगस्त्येन महर्षिणा च ॥ धन्यं यशस्यं बहुपापनाशनं
संकीर्तनाच्छ्रवणात्संस्मृतेश्च ॥ ३३ ॥ इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे प्रह्लादतीर्थयात्रा नाम त्र्यशीतितमोऽध्यायः॥८३॥

पुलस्त्य उवाच ॥ गते च तीर्थयात्रायां प्रह्लादे दानवेश्वरे ॥ कुरुक्षेत्रे समभ्यागाद्द्रष्टुं वैरोचनो मुने ॥ १ ॥ तस्मिन्महाधर्म-
युते तीर्थे ब्राह्मणपुङ्गवः ॥ शुक्रो द्विजातिप्रवरानामन्त्रयत भार्गवः ॥ २ ॥ भृगुणाऽऽमन्त्र्यमाणास्ते श्रुत्वाऽऽत्रेयसगौतमाः ॥ कौशि-
काङ्गिरसश्चैव तत्त्वज्ञाः कुरुजाङ्गलम् ॥ ३ ॥ उत्तराशां प्रजग्मुस्ते नदीमनु शतद्रवीम् ॥ शातद्रवे जले स्नात्वा विपाशं प्रययुस्ततः
॥ ४ ॥ विज्ञाय तत्रास्य रातिं स्नात्वाऽर्च्य पितृदेवताः ॥ ततोऽपि किरणां पुण्यां दिनेशकिरणच्युताम् ॥ ५ ॥ तस्यां स्नात्वा च
देवर्षे सर्व एव महर्षयः ॥ सुपुण्योदां वेगवतीं स्नात्वा जग्मुरथेश्वरीम् ॥ ६ ॥ देविकाया जले स्नात्वा पयोष्णायां च तापसाः ॥
अवतीर्णा मुने स्नातुं माधवाद्याः सुभानवीम् ॥७॥ ततो निमग्ना ददृशुः प्रतिबिम्बमथात्मनः ॥ अन्तर्जले द्विजश्रेष्ठ महदाश्चर्यकार-
कम् ॥ ८ ॥ उन्मज्जन्तश्च ददृशुः पुनर्विस्मितमानसाः ॥ ततः स्नात्वा समुत्तीर्णा ऋषयः सर्व एव हि ॥ ९ ॥ पुष्कराक्षमयोगं-
न्धिं ब्रह्माणं चाप्यपूजयन् ॥ ततो भूयः सरस्वत्यास्तीर्थे त्रैलोक्यविश्रुते ॥१०॥ कोटितीर्थे रुद्रकोटिं ददर्श वृषभध्वजम् ॥ नैमि-
षेया द्विजवरा मागधेयाः ससैन्धवाः ॥ ११ ॥ धर्मारण्याः पुष्करेया दण्डकारण्यकास्तथा ॥ चाम्पेयास्तारकच्छेया देविकातीर्थ-
काश्च ये ॥ १२ ॥ ते तत्र शंकरं द्रष्टुं समायाता द्विजातयः ॥ कोटिसंख्यास्तपःसिद्धा हरदर्शनलालसाः ॥ १३ ॥ अहं पूर्वमहं
पूर्वमित्येवंवादिनो मुने ॥ तानाकुलान्हरो दृष्ट्वा महर्षीन्दग्धकिल्बिषान् ॥ १४ ॥ तेषामेवानुकम्पार्थं कोटिमूर्तिरभूच्छिवः ॥ ततस्ते
मुनयः प्रीताः सर्व एव महेश्वरम् ॥ १५ ॥ संपूजयन्तस्ते तस्थुस्तीर्थं कृत्वा पृथक्पृथक् ॥ इत्येवं रुद्रकोटीभिर्नाम शंभोरजायत

॥ १६ ॥ तं ददर्श महातेजाः प्रह्लादो भक्तिमान्वशी ॥ कोटितीर्थे ततः स्नात्वा तर्पयित्वा वसून्पितॄन् ॥ रुद्रकोटिं समभ्यर्च्य
जगाम कुरुजाङ्गलम् ॥ १७ ॥ ततो देववरं स्थाणुं शंकरं पार्वतीप्रियम् ॥ सरस्वतीजले मग्नं ददर्श सुरपूजितम् ॥ १८ ॥ सारस्व-
तेऽम्भसि स्नात्वा स्थाणुं संपूज्य भक्तितः ॥ स्नात्वा दशाश्वमेधे च संपूज्य च सुरान्पितॄन् ॥१९॥ सहस्रलिङ्गं संपूज्य स्नात्वा
तस्मिन्ह्रदे शुचिः ॥ अभिवाद्य गुरुं शुक्रं सोमतीर्थं जगाम ह ॥ २० ॥ तत्र स्नात्वाऽभ्यर्च्य पितॄन्सोमं संपूज्य भक्तितः ॥
क्षीरिकावासमभ्येत्य स्नानं चक्रे महामतिः ॥ २१ ॥ प्रदक्षिणीकृत्य तरुं वरुणं चार्च्य बुद्धिमान् ॥ भूयः कुरुध्वजं दृष्ट्वा
पद्माक्षीं नगरीं गतः ॥ २२ ॥ तत्रार्च्य मित्रावरुणौ भास्करौ लोकपूजितौ ॥ कुमारधारामभ्येत्य ददर्श स्वामिनं वशी ॥
॥ २३ ॥ स्नात्वा कपिलधारायां संतर्प्यर्षीन् पितॄन्सुरान् ॥ दृष्ट्वा स्कन्दं समभ्यर्च्य नर्मदायां जगाम ह ॥ २४ ॥ तस्यां
स्नात्वा समभ्यर्च्य वासुदेवं श्रियः पतिम् ॥ जगाम भूधरं द्रष्टुं वाराहं चक्रधारिणम् ॥ २५ ॥ स्नात्वा कोकामुखे तीर्थे
संपूज्य धरणीधरम् ॥ त्रिसौवर्णं महादेवं मधुदेशं जगाम ह ॥ २६ ॥ तत्र नारीह्रदे स्नात्वा पूजयित्वा च शंकरम् ॥
कालञ्जरं समभ्येत्य नीलकण्ठं ददर्श च ॥ २७ ॥ नीलतीर्थजले स्नात्वा पूजयित्वा ततः शिवम् ॥ जगाम सागरानूपे प्रभासे
द्रष्टुमीश्वरम् ॥ २८ ॥ स्नात्वा च संगमे नद्याः सरस्वत्यार्णवस्य च ॥ सोमेश्वरं लोकपतिं स ददर्श कपर्दिनम् ॥ २९ ॥ यो
दक्षशापनिर्दग्धः क्षयी ताराधिपः शशी ॥ आप्यायितः शंकरेण विष्णुना सकपर्दिना ॥ ३० ॥ तावार्च्य देवप्रवरौ स जगाम

महालयम् ॥ तत्र रुद्रं समभ्यर्च्य प्रजगामोत्तरान्कुरून् ॥ ३१ ॥ पद्मनाभं स तत्रार्च्य सप्तगोदावरं ययौ ॥ तत्र स्नात्वाऽऽर्च्य देवेशं भीमं त्रैलोक्यवन्दितम् ॥ ३२ ॥ गत्वा दारुवने श्रीमाञ्श्रीलिङ्गं प्रददर्श ह ॥ तमार्च्य ब्राह्मणीं गत्वा स्नात्वाऽऽर्च्य त्रिदशेश्वरम् ॥ ३३ ॥ प्लक्षावतरणं गत्वा श्रीनिवासमपूजयत् ॥ ततश्च कुण्डिनं गत्वा संपूज्य प्राणतृप्तिदम् ॥ ३४ ॥ शूर्पारकं चतुर्बाहुं पूजयित्वा विधानतः ॥ मागधारण्यमासाद्य ददर्श वसुधाधिपम् ॥३५॥ तमर्चयित्वा विश्वेशं स जगाम प्रजासुखम् ॥ महीतीर्थे ततः स्नात्वा वासुदेवं प्रणम्य च ॥ ३६ ॥ शोणं संप्राप्य संपूज्य रुक्मधर्माणमीश्वरम् ॥ महाकोश्यां महादेवं हंसाख्यं भक्तिमानथ ॥ ३७ ॥ पूजयित्वा जगन्नाथं सैन्धवारण्यमुत्तमम् ॥ तं दृष्ट्वाऽऽर्च्य हरिं चासौ तीर्थं कनखलं ययौ ॥ ३८ ॥ तत्रार्च्य भद्रकालीशं वीरभद्रं च दानवः ॥ धनाधिपं च मेर्वर्कं ययावथ गिरिव्रजम् ॥ ३९ ॥ तत्र देवं पशुपतिं लोकनाथं महेश्वरम्॥ संपूजयित्वा विधिवत्कामरूपं जगाम ह ॥ ४० ॥ शशिप्रभं देववरं त्रिनेत्रं संपूजयित्वा सहितं मृडान्या ॥ जगाम तीर्थं प्रवरं महाख्यं तस्मिन्महादेवमपूजयच्च ॥ ४१ ॥ ततस्त्रिकूटं गिरिमद्रिपुत्रं जगाम द्रष्टुं सहचक्रपाणिम् ॥ तमार्च्य भक्त्या तु गजेन्द्रमोक्षणं जजाप जाप्यं परमं पवित्रम् ॥ ४२ ॥ तुतोष दैत्येश्वरसूनुरादरान्मासत्रयं मूलफलाम्बुभक्षी ॥ निवेद्य विप्रप्रवरेषु काञ्चनं जगाम घोरं स हि दण्डकं वनम् ॥ ४३ ॥ तत्र दिव्यं महाशाखं वनस्पतिवपुर्धरम् ॥ ददर्श पुण्डरीकाक्षं महास्वापदवारणम् ॥ ४४ ॥ तस्याधस्थं त्रिरात्रं स महाभागवतोऽसुरः ॥ स्थितः स्थण्डिलशायी च पठन्सारस्वतं स्तवम् ॥ ४५ ॥

तस्मात्तीर्थवरं विद्वान्सर्वपापप्रणाशनम् ॥ जगाम दानवो द्रष्टुं सर्वपापहरं हरिम् ॥ ४६ ॥ तस्याग्रतो जगादासौ स्तवौ पापप्रमोचनौ ॥ यौ पुरा भगवान्प्राह क्रोडरूपी जनार्दनः ॥ ४७ ॥ तस्मादथागाद्दैत्येन्द्रः शालग्रामं महाफलम् ॥ यत्र संनिहितो विष्णुः स्तस्भेषु स्थावरेषु च ॥४८॥ तत्र सर्वगतं विष्णुं मत्वा चक्रे रतिं बली ॥ पूजयन्भगवत्पादौ महाभागवतो मुने॥४९॥ इयं तवोक्ता मुनिसंघजुष्टा प्रह्लादतीर्थानुगतिः सुपुण्या ॥ यत्कीर्तनाच्छ्रवणात्स्पर्शनाच्च विमुक्तपापा मनुजा भवन्ति ॥ ५० ॥ इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे प्रह्लादतीर्थयात्रा नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥[ नारद उवाच ]॥ याञ्जप्यान्भगवद्भक्त्या प्रह्लादो दानवोऽजपत् ॥ गजेन्द्रमोक्षणादींस्त्वं चतुरस्तान्वदस्व मे ॥१॥[ पुलस्त्य उवाच ]॥ शृणुष्व कथयिष्यामि जप्यानेतांस्तपोधन ॥ दुःस्वप्ननाशो भवति यैरुक्तैः संस्मृतैः श्रुतैः ॥ २ ॥ गजेन्द्रमोक्षणं त्वादौ शृणु त्वं तदनन्तरम् ॥ सारस्वतौ ततः पुण्यौ पापप्रशमनौ स्तवौ ॥ ३ ॥ सर्वरत्नमयः श्रीमांस्त्रिकूटो नाम पर्वतः ॥ सुतः पर्वतराजस्य सुमेरोर्भास्करद्युतेः ॥ ४ ॥ क्षीरोदजलवीच्यग्रैर्धौतामलशिलातलः ॥ उत्थितः सागरं भित्त्वा देवर्षिगणसेवितः ॥ ५ ॥ अप्सरोभिः परिवृतः श्रीमान्प्रस्रवणाकुलः ॥ गन्धर्वैः किन्नरैर्यक्षैः सिद्धचारणगुह्यकैः ॥ ६ ॥ विद्याधरैः सपत्नीकैः संयतैश्च तपस्विभिः ॥ वृकद्वीपगजेन्द्रैश्च वृतगात्रो विराजते ॥७॥ पुन्नागैः कर्णिकारैश्च बिल्वामलकपाटलैः ॥ चूतनीपकदम्बैश्च चन्दनागरुचम्पकैः ॥८॥ शालैस्तालैस्तमालैश्च सरलार्जुनपर्पटैः ॥ तथाऽन्यैर्विविधैर्वृक्षैः सर्वतः समलंकृतः ॥९॥ नानाधात्वङ्कितैः शृङ्गैः प्रस्रवद्भिः समन्ततः ॥

शोभितो रुचिरप्रस्थैस्त्रिभिर्विस्तीर्णसानुभिः ॥ १० ॥ मृगैः शाखामृगैः सिंहैर्मातङ्गैश्च सदामदैः ॥ जीवञ्जीवककसंघुष्टैश्चकोरशि-
खिनादितैः॥११॥तस्यैकं काश्चनं शृङ्गं सेवते यद्दिवाकरः॥ नानापुण्यसमाकीर्णं नानागन्धादिवासितम्॥१२॥ द्वितीयं राजतं शृङ्गं
सेवते यन्निशाकरः ॥ पाण्डुराम्बुदसङ्काशं तथा रत्नचयोपमम्॥१३॥वज्रेन्द्रनीलवैडूर्यतेजोभिर्भासयन्दिशः॥ तृतीयं ब्रह्मसदनं प्रकृ-
ष्टं शृङ्गमुत्तमम् ॥ १४ ॥ न तत्कृतघ्नाः पश्यन्ति नृशंसा नैव राक्षसाः ॥ नातप्ततपसो लोके ये च पापकृतो जनाः ॥ १५ ॥
तस्य सानुमतः पृष्ठे सरः काश्चनपङ्कजम् ॥ कारण्डवसमाकीर्णं राजहंसोपशोभितम् ॥ १६ ॥ कुमुदोत्पलकह्लारैः पुण्डरीकैश्च
शोभितम् ॥ कमलैः शतपत्रैश्च काश्चनैः समलंकृतम् ॥ १७ ॥ पत्रैर्मरकतप्रख्यैः पुष्पैः काश्चनसन्निभैः ॥ गुल्मैः कीचकरेणूनां
समन्तात्परिवेष्टितम् ॥ १८ ॥ तस्मिन्सरसि दुष्टात्मा निगूढोऽन्तर्जलेशयः ॥ आसीद्ग्राहो गजेन्द्राणां दुराधर्षो महाबलः ॥
॥ १९ ॥ अथ दन्तोज्ज्वलवपुः कदाचिद्गजयूथपः ॥ मदस्रावी जलाकाङ्क्षी पादचारीव पर्वतः ॥ २० ॥ वासयन्मदगन्धेन
गिरिमैरावतोपमः ॥ स गजोऽञ्जनसङ्काशो मदाघूर्णितलोचनः ॥ २१ ॥ तृषितः स्नातुकामोऽसाववतीर्णश्च तज्जलम् ॥ सलीलः
पङ्कजवने यूथमध्यगतस्त्वरन् ॥ २२ ॥ गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्तिना ॥ पश्यन्तीनां करेणूनां क्रोशन्तीनां च
दारुणम् ॥ २३ ॥ ह्रियते पङ्कजवने ग्राहेणातिबलीयसा ॥ गज आकर्षते तीरं ग्राह आकर्षते जलम् ॥ २४ ॥ तयोर्दिव्यं
महायुद्धं जातं वर्षसहस्रकम् ॥ वारुणैः संयुतः पाशैर्निष्प्रयत्नगतिः कृतः ॥ २५ ॥ वेष्टयमानः सुघोरैस्तु पाशैर्नागो दृढैस्तथा ॥

विस्फूर्य च यथाशक्ति विक्रोशंश्च महारवान् ॥ २६ ॥ व्यथितः सन्निरुच्छ्वासो गृहीतो घोरकर्मणा ॥ परमामापदं प्राप्य मनसा
ऽचिन्तयद्धरिम् ॥ २७ ॥ स तु नागवरः श्रीमान्नारायणपरायणः ॥ तमेव शरणं देवं गतः सर्वात्मना तदा ॥ २८ ॥
एकात्मा निगृहीतात्मा विशुद्धेनान्तरात्मना ॥ जन्मजन्मान्तराभ्यासाद्भक्तिमान्गरुडध्वजे ॥ २९ ॥ आद्यं देवं महादेवं पूजया-
मास केशवम् ॥ मथितामृतफेनाभं शङ्खचक्रगदाधरम् ॥ ३० ॥ सहस्रशुभनामानमादिदेवमजं विभुम् ॥ प्रगृह्य पुष्कराग्रेण
काञ्चनं कमलोद्भवम् ॥ आपद्विमोक्षमन्विच्छन्गजः स्तोत्रमुदैरयत् ॥ ३१ ॥ गजेन्द्र उवाच ॥ ॐ नमो मूलप्रकृतये अजिताय
महात्मने ॥ अनाश्रिताय देवाय निःस्पृहाय नमोऽस्तु ते ॥ ३२ ॥ नम आद्याय वामाय आर्षायादिप्रवर्तिने ॥ अनन्तराय
चैकाय अव्यक्ताय नमो नमः ॥ ३३ ॥ नमो गुह्याय गूढाय गुणाय गुणवर्तिने ॥ अतर्क्यायाप्रमेयाय अतुलाय नमो नमः ॥
॥ ३४ ॥ नमः शिवाय शान्ताय निश्चिन्ताय यशस्विने ॥ सनातनाय पूर्वाय पुराणाय नमो नमः ॥ ३५ ॥ नमोऽस्तु तस्मै
देवाय निर्गुणाय गुणात्मने ॥ नमो जगत्प्रतिष्ठाय गोविन्दाय नमो नमः ॥ ३६ ॥ नमोऽस्तु पद्मनाभाय सांख्ययोगोद्भवाय
च ॥ विश्वेश्वराय देवाय शिवाय हरये नमः ॥ ३७ ॥ नमोऽस्तु तस्मै देवाय निर्गुणाय गुणात्मने ॥ नारायणाय विश्वाय देवाय
परमात्मने ॥ ३८ ॥ नमो नमः कारणवामनाय नारायणायामितविक्रमाय ॥ श्रीशार्ङ्गचक्रासिगदाधराय नमोऽस्तु तस्मै
पुरुषोत्तमाय ॥ ३९ ॥ गुह्याय वेदनिलयाय महोरगाय सिंहाय दैत्यनिधनाय चतुर्भुजाय ॥ ब्रह्मेन्द्ररुद्रमुनिचारणसंस्तुताय देवोत्त-

माय सकलाय नमोऽच्युताय ॥४०॥ नागेन्द्रभोगशयनाय च सुप्रियाय गोक्षीरहेमशुकनीलघनोपमाय ॥ पीताम्बराय मधुकैटभना-
शनाय विश्वाद्यचारुमुकुटाय नमोऽक्षराय ॥४१॥ नाभिप्रजातकमलस्थचतुर्मुखाय क्षीरोदकार्णवनिकेतयशोधराय ॥ नानाविचित्र-
कनकाङ्गदभूषणाय सर्वेश्वराय वरदाय नमो वराय ॥४२॥ भक्तिप्रियाय वरदीप्तसुदर्शनाय देवेन्द्रविघ्नशमनोद्यतपौरुषाय ॥ फुल्लारवि-
न्दविमलायतलोचनाय योगेश्वराय वरदाय नमो वराय ॥४३॥ ब्रह्मायनाय त्रिदशायनाय लोकायनायात्महितायनाय ॥ नारायणा-
यात्मविकाशनाय महावराहाय नमः सुरोऽसि ॥ ४४ ॥ कूटस्थमव्यक्तमचिन्त्यरूपं नारायणं कारणमादिदेवम् ॥ युगान्तशेषं
पुरुषं पुरातनं तं देवदेवं शरणं प्रपद्ये ॥ ४५ ॥ योगेश्वरं चारुविचित्रमौलिमज्ञेयमग्र्यं प्रकृतेः परस्थम् ॥ क्षेत्रज्ञमात्मप्रभवं
वरेण्यं तं वासुदेवं शरणं प्रपद्ये ॥ ४६ ॥ अदृश्यमव्यक्तमचिन्त्यमव्ययं ब्रह्मर्षयो ब्रह्ममयं सनातनम् ॥ वदन्ति यं वै पुरुषं सना-
तनं तं देवगुह्यं शरणं प्रपद्ये ॥ ४७ ॥ यदक्षरं ब्रह्म वदन्ति सर्वगं निशम्य यं मृत्युमुखात्प्रमुच्यते ॥ तमीश्वरं तृप्तमनुत्तमैर्गुणैः परा-
यणं विष्णुमुपैमि शाश्वतम् ॥४८॥ कार्यं क्रियाकारणमप्रमेयं हिरण्यनाभं वरपद्मनाभम् ॥ महाबलं देवनिधिं सुरेशं व्रजामि विष्णुं
शरणं जनार्दनम् ॥४९॥ किरीटकेयूरमहार्हनिष्कैर्मण्युत्तमालंकृतसर्वगात्रम्॥ पीताम्बरं काञ्चनभक्तिचित्रं मालाधरं केशवमभ्युपैमि॥
॥५०॥ तारोद्भवं वेदविदां वरिष्ठं योगात्मनां सांख्यविदां वरिष्ठम् ॥ आदित्यरुद्राश्विवसुप्रभावं प्रभुं प्रपद्येऽच्युतमादिभूतम्॥५१॥
श्रीवत्साङ्कं महादेवं देवगुह्यं मनोरमम् ॥ प्रपद्ये सूक्ष्ममतुलं वरेण्यमभयप्रदम् ॥५२॥ प्रभवं सर्वभूतानां निर्गुणं परमेश्वरम्॥ प्रपद्ये

मुक्तसङ्गानां यतीनां परमां गतिम् ॥ ५३ ॥ भगवन्तं गुणाध्यक्षमक्षरं पुष्करेक्षणम् ॥ शरण्यं शरणं भक्त्या प्रपद्ये भक्तवत्सलम्
॥ ५४ ॥ त्रिविक्रमं त्रिलोकेशं सर्वेषां प्रपितामहम् ॥ योगात्मान महात्मानं प्रपद्येऽहं जनार्दनम् ॥ ५५ ॥ आदिदेवमजं
शंभुं व्यक्ताव्यक्तं सनातनम् ॥ नारायणमणीयांसं प्रपद्ये ब्राह्मणप्रियम् ॥ ५६ ॥ नमो हराय देवाय नमः सर्वमहाय च ॥
प्रपद्ये देवदेवेशमणीयांसं तनोः सदा ॥ ५७ ॥ एकाय लोकतत्त्वाय परतः परमात्मने ॥ नमः सहस्रशिरसे अनन्ताय महात्मने ॥
॥ ५८ ॥ त्वामेव शरणं देवमृषयो वेदपारगाः ॥ कीर्तयन्ति च यं सर्वे ब्रह्मादीनां परायणम् ॥ ५९ ॥ नमस्ते पुण्डरीकाक्ष भक्ताना-
मभयप्रद ॥ सुब्रह्मण्य नमस्तेऽस्तु त्राहि मां शरणागतम् ॥६०॥ पुलस्त्य उवाच ॥ भक्तिं तस्यानुसंचिन्त्य नागस्यामोघसंभवः ॥
प्रीतिमानभवद्विष्णुः शङ्खचक्रगदाधरः ॥६१॥ सान्निध्यं कल्पयामास तस्मिन्सरसि केशवः॥गरुडस्थो जगत्स्वामी लोकाधारस्तपो-
धनः ॥ ६२ ॥ ग्राहग्रस्तं गजेन्द्रं तं तं च ग्राहं जलाशयात् ॥ उज्जहाराप्रमेयात्मा तरसा मधुसूदनः ॥ ६३ ॥ जलस्थं दार-
यामास ग्राहं चक्रेण माधवः ॥ मोक्षयामास नागेन्द्रं पाशेभ्यः शरणागतम् ॥६४॥ एवं हि देवशापेन हूहूर्गन्धर्वसत्तमः ॥ ग्राहत्व-
मगमत्कृष्णान्मोक्षं प्राप्य दिवं गतः ॥ ६५ ॥ गजोऽपि विष्णुना स्पृष्टो जातो दिव्यवपुः पुमान् ॥ पापाद्विमुक्तौ युगपद्गजगन्धर्व-
सत्तमौ ॥ ६६ ॥ प्रीतिमान्पुण्डरीकाक्षः शरणागतवत्सलः ॥ अभवत्त्वथ देवेशस्ताभ्यां चैव प्रपूजितः ॥ ६७ ॥ इदं च भगवा-
न्योगी गजेन्द्रं शरणागतम् ॥ प्रोवाच मुनिशार्दूल मधुरं मधुसूदनः ॥ ६८ ॥ [ श्रीभगवानुवाच ]॥ यो मां त्वां च सरश्चेदं ग्राहस्य

च विदारणम्॥गुल्मकीचकरेणूनां रूपं मेरुसुतस्य च ॥६९॥ अश्वत्थं भास्करं गङ्गां नैमिषारण्यमेव च॥ संस्मरिष्यन्ति मनुजाः
प्रयाताः स्थिरबुद्धयः॥७०॥कीर्तयिष्यन्ति भक्त्या च श्रोष्यन्ति च शुचिव्रताः॥दुःस्वप्नो नश्यते तेषां सुस्वप्नश्च भविष्यति॥७१॥
मात्स्यं कौर्मं च वाराहं वामनं तार्क्ष्यमेव च ।। नारसिंहं च नागेन्द्रं सृष्टिप्रलयकारकम्॥७२॥ एतानि प्रातरुत्थाय संस्मरिष्यन्ति
ये नराः ॥ ॥ सर्वपापैः प्रमुच्यन्ते पुण्याँल्लोकानवाप्नुयुः ॥ ७३ ॥[ पुलस्त्य उवाच ]॥ एवमुक्त्वा हृषीकेशो गजेन्द्रं गरुडध्वजः ॥
स्पर्शयामास हस्तेन गजं गन्धर्वमेव च ॥ ७४ ॥ ततो दिव्यवपुर्भूत्वा गजेन्द्रो मधुसूदनम् ॥ जगाम विष्णुं शरणं नारायणपरा-
यणः ॥ ७५ ॥ ततो नारायणः श्रीमान्मोक्षयित्वा गजोत्तमम् ॥ पापं बन्धाच्च शापाच्च ग्राहं चाद्भुतकर्मकृत् ॥ ७६ ॥ ऋषिभिः स्तूय-
मानश्च देवगुह्यपरायणैः ॥ ततः स भगवान्विष्णुर्दुर्विज्ञेयगतिः प्रभुः॥७७॥गजेन्द्रमोक्षणं दृष्ट्वा देवाः शक्रपुरोगमाः॥ ववन्दिरे महा-
त्मानं प्रभुं नारायणं हरिम् ॥ ७८ ॥ महर्षयश्चारणाश्च दृष्ट्वा गजविमोक्षणम् ॥ विस्मयोत्फुल्लनयनाः संस्तुवन्ति जनार्दनम् ॥ ७९ ॥
प्रजापतिपतिर्ब्रह्मा चक्रपाणेर्विचेष्टितम् ॥ गजेन्द्रमोक्षणं दृष्ट्वा इदं वचनमब्रवीत् ॥ ८० ॥ य इदं शृणुयान्नित्यं प्रातरुत्थाय
मानवः ॥ प्राप्नुयात्परमां सिद्धिं दुःस्वप्नश्च विनश्यति ॥८१॥ गजेन्द्रमोक्षणं पुंसां सर्वपापप्रणाशनम् ॥ कथितेन स्मृतेनाथ श्रुतेन
च तपोधन ॥ ८२ ॥ एतत्पवित्रं परमं सुपुण्यं संकीर्तनीयं चरितं मुरारेः ॥ यस्मिन्किलोक्ते बहुपापबन्धनाल्लभेत मोक्षं द्विरदो नु
यद्वत् ॥८३॥ अजं वरेण्यं वरपद्मनाभं नारायणं ब्रह्मनिधिं सुरेशम् ॥ तं देवगुह्यं पुरुषं पुराणं वन्दाम्यहं लोकपतिं वरेण्यम ॥८४॥
इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे गजेन्द्रमोक्षणं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥[ पुलस्त्य उवाच ]॥

॥१७८॥

कश्चिदासीद् द्विजद्रोग्धा पिशुनः क्षत्रियाधमः ॥ परपीडारुचिः क्षुद्रः स्वभावादेव निर्घृणः॥१॥ नोपासिताः सदा तेन पितृदेवद्विजा-
तयः ॥ स त्वायुषि परिक्षीणे जज्ञे घोरनिशाचरः ॥ २ ॥ तेनासौ कर्मदोषेण स्वेन पापकृतां वरः ॥ क्रूरैश्चक्रे तदा वृत्तिं राक्षसत्वा-
द्विशेषतः ॥ ३ ॥ तस्य पापरतस्यैवं जग्मुर्वर्षशतानि तु ॥ तेनैव कमदोषेण नान्या वृत्तिररोचत ॥ ४ ॥ यं यं पश्यति सत्त्वं स
तं तमादाय राक्षसः ॥ चखाद रौद्रकर्माऽसौ बाहुगोचरमागतम् ॥ ५ ॥ एवं तस्यातिदुष्टस्य कुर्वतः प्राणिनां वधम् ॥ जगाम
सुमहान्कालः परिणामं तथा वयः ॥ ६ ॥ स कदाचित्तपस्यन्तं ददर्श सरितस्तटे ॥ महाभाग ह्यूर्ध्वभुजं यथावत्संजितेन्द्रियम् ॥
॥ ७ ॥ अनया रक्षया ब्रह्मन्कृतरक्षं तपोनिधिम् ॥ योगाचार्यं शुचिं दक्षं वासुदेवपरायणम् ॥ ८ ॥ विष्णुः प्राच्यां स्थितश्चक्री
विष्णुर्दक्षिणतो गदी ॥ प्रतीच्यां शार्ङ्गधृग्विष्णुर्विष्णुः खड्गी ममोत्तरे ॥ ९ ॥ हृषीकेशो विकोणेषु तच्छिद्रेषु जनार्दनः ॥ क्रोड-
रूपी हरिर्भूमौ नरसिंहोऽम्बरे मम ॥ १० ॥ क्षुरान्तममलं चक्रं भ्रमत्येतत्सुदर्शनम् ॥ तस्यांशुमाला दुष्प्रेक्ष्या हन्ति प्रेतनिशाच-
रान् ॥ ११ ॥ गदा चेयं सहस्रार्चिरूर्ध्वं हन्तुं वृकांस्तथा ॥ रक्षोभूतपिशाचानां डाकिनीनां च शातनी ॥ १२ ॥ शार्ङ्गं विस्फू-
र्जितं चैव वासुदेवस्य मद्रिपून् ॥ तिर्यङ्मनुष्यकूष्माण्डप्रेतादीन्हन्त्वशेषतः ॥ १३ ॥ खड्गधाराजलज्योत्स्नानिर्धूता ये ममा-
हिताः ॥ ते यान्तु सौम्यतां सद्यो गरुडेनेव पन्नगाः ॥ १४ ॥ ये कूष्माण्डास्तथा दैत्या यक्षा ये च निशाचराः ॥ प्रेता विना-

यकाः क्रूरा मनुष्या जृम्भकाः खगाः ॥१५॥ सिंहादयो ये पशवो दन्दशूकाश्च पन्नगाः ॥ सर्वे भवन्तु ते सौम्या विष्णुशङ्खरवा-
हताः ॥ १६ ॥ चित्तवृत्तिहरा ये च ये जनाः स्मृतिहारकाः ॥ बलौजसां च हर्तारश्छायाविभ्रंशकाश्च ये ॥ १७ ॥ ये चोपभोग-
हर्तारो ये च लक्षणनाशकाः ॥ कूष्माण्डास्ते प्रणश्यन्तु विष्णुचक्ररवाहताः ॥१८॥ बुद्धिस्वास्थ्यं मनःस्वास्थ्यं स्वास्थ्यमैन्द्रियकं
तथा ॥ ममास्तु वासुदेवस्य देवदेवस्य कीर्तनात् ॥ १९ ॥ पृष्ठे पुरस्तादथ दक्षिणोत्तरे विकोणतश्चास्तु जनार्दनो हरिः ॥ तमी-
ड्यमीशानमनन्तमच्युतं जनार्दनं प्राणपतिं न सीदति ॥ २० ॥ यथा परं ब्रह्म हरिस्तथा परं जगत्स्वरूपं च स एव केशवः ॥
ऋतेन तेनाच्युतनामकीर्तनात्प्रणाशमेतत्त्रिविधं ममाशुभम् ॥ २१ ॥ इत्येवं चात्मरक्षार्थं कृत्वा वै विष्णुपञ्जरम् ॥ संस्थितोऽसा-
वपि बली राक्षसः समुपाद्रवत् ॥२२॥ ततो द्विज नियुक्तया रक्षया रजनीचरः ॥ निर्धूतवेगः सहसा तस्थौ मासचतुष्टयम् ॥ २३॥
यावद्द्विजस्य देवर्षे समाप्तिर्वै समाधितः ॥ ततो जप्यावसानेऽसौ तं ददर्श निशाचरम् ॥ २४ ॥ दीनं हतबलोत्साहं कान्दिशीकं
हतौजसम् ॥ तं दृष्ट्वा कृपयाऽऽविष्टः समाश्वास्य निशाचरम्॥२५॥पप्रच्छाऽऽगमने हेतुं समाचष्टे यथागतम् ॥ स्वभावमात्मनो
दृष्टुं रक्षया तेजसो हतिम् ॥२६॥ कथयित्वा च तद्रक्षः कारणं विधिवत्ततः ॥ प्रसीदेत्यब्रवीद्विप्रं निर्विण्णः स्वेन कर्मणा ॥२७॥
बहूनि पापानि मया कृतानि तथा च सन्तो बहवो मया हताः ॥ २८ ॥ कृताः स्त्रियो मया बह्व्यो विधवाः पुत्रवर्जिताः ॥ अना-
गसां च सत्त्वानामनेकानां क्षयः कृतः ॥ २९ ॥ तस्मात्पापादहं मोक्षमिच्छामि त्वत्प्रसादतः ॥ तत्पापप्रशमायालं कुरु मे धर्म-

नाशनम् ॥ ३० ॥ पापस्यास्य क्षयकरमुपदेशं प्रयच्छ मे ॥ वचनं प्राह धर्मार्थहेतुमच्च स्वभाषितम् ॥ ३१ ॥ तस्य तद्वचनं श्रुत्वा
निशाटस्य द्विजोत्तमः ॥ कथं क्रूरस्वभावस्यासतस्तव निशाचर ॥ सहसैव समायाता जिज्ञासा धर्मवर्त्मनि ॥ ३२ ॥ राक्षस
उवाच ॥ त्वां वै समागतोऽस्म्यद्य क्षिप्तोऽहं रक्षया बलात् ॥ तव संसर्गतो ब्रह्मञ्जातो निर्वेद उत्तमः ॥३३॥ का सा रक्षा न तां वेद्मि
वेद्मि नास्याः परायणम् ॥ यस्याः संसर्गमासाद्य निर्वेदं प्रापितो वरम्॥३४॥त्वं कृपां कुरु धर्मज्ञ मय्यनुक्रोशमावह ॥ यथा पापा-
पनोदो मे भवत्यार्य तथा कुरु ॥ ३५ ॥ पुलस्त्य उवाच ॥ इत्येवमुक्तः स मुनिस्तदा तेन च राक्षसम् ॥ प्रत्युवाच महाभाग
विमृश्य सुचिरं बहु ॥ ३६ ॥ ऋषिरुवाच ॥ यन्मामाहोपदेशार्थं निर्विण्णः स्वेन कर्मणा ॥ युक्तमेतद्धि पापानां निवृत्तिरुपका-
रिका ॥ ३७ ॥ करिष्ये यातुधानानां न त्वहं धर्मदेशनम् ॥ तान्संपृच्छ द्विजान्सौम्य ये वै प्रवचने रताः ॥ ३८ ॥ एवमुक्त्वा
ययौ विप्रश्चिन्तामाप च राक्षसः ॥ कथं पापापनोदः स्यादिति चिन्ताकुलेन्द्रियः ॥ ३९ ॥ न चखाद स सत्त्वानि क्षुधासं-
बाधितोऽपि सन् ॥ षष्ठे षष्ठे तदा काले जन्तुमेकमभक्षयत् ॥ ४० ॥ स कदाचित्क्षुधाविष्टः पर्यटन्विपुले वने ॥ ददर्शाथ फला-
हारमागतं ब्रह्मचारिणम् ॥ ४१ ॥ गृहीतो रक्षसा तेन स तदा मुनिदारकः ॥ निराशो जीविते प्राह सामपूर्वं निशाचरम् ॥४२॥
ब्राह्मण उवाच ॥ भोऽनघ ब्रूहि तत्कार्यं गृहीतो येन हेतुना ॥ तदेवं ब्रूहि भद्रं ते स्वयमस्म्यनुशाधि माम् ॥ ४३ ॥ राक्षस
उवाच ॥ षष्ठे काले त्वमाहारः क्षुधितस्य समागतः ॥ निष्ठुरस्यातिपापस्य निर्घृणस्य द्विजद्रुहः ॥ ४४ ॥ ब्राह्मण उवाच ॥

यद्यवश्यं त्वया चाहं भक्षितव्यो निशाचर ॥ आयास्यामि तवाद्यैव निवेद्य गुरवे फलम् ॥ ४५ ॥ गुर्वर्थमेतदागत्य यत्फलग्रहणं कृतम् ॥ ममात्र निष्ठां प्राप्तस्य फलानि विनिवेदितुम् ॥ ४६ ॥ स त्वं मुहूर्तमात्रं मामत्रैवमनुपालय ॥ निवेद्य गुरवे यावदिहागच्छाम्यहं फलम् ॥ ४७ ॥[ राक्षस उवाच ]॥ षष्ठे काले न मे ब्रह्मन्कश्चिद् ग्रहणमागतः ॥ प्रतिमुच्येत देवोऽपि इति मे पापजीविका ॥ ४८ ॥ एक एवात्र मोक्षस्य तव हेतुः शृणुष्व तम् ॥ मुञ्चाम्यहमसंदिग्धं यदि तत्कुरुते भवान् ॥ ४९ ॥ [ब्राह्मण उवाच]॥ गुरोर्यत्र विरुद्धं स्याद्यत्र धर्मोपरोधकम् ॥ तत्करिष्याम्यहं रक्षो यत्र व्रतहरं मम ॥ ५० ॥[ राक्षस उवाच ]॥ मया निसर्गतो ब्रह्मञ्जातिदोषाद्विशेषतः ॥ निर्विवेकेन चित्तेन पापकर्म सदा कृतम् ॥ ५१ ॥ आबाल्यान्मम पापेषु न धर्मेषु रतं मनः ॥ तत्पापसंक्षयान्मोक्षं प्राप्नुयां येन तत्त्वतः ॥ ५२ ॥ यानि यानि च कर्माणि बालत्वाच्चरितानि च ॥ दुष्टां योनिमिमां प्राप्य तन्मुक्तिं कथय द्विज ॥ ५३ ॥ यद्येतद्द्विजपुत्र त्वं समाख्यास्यस्यशेषतः ॥ ततः क्षुधार्तान्मत्तस्त्वं नियतं मोक्षमाप्स्यसि ॥ ५४ ॥ न चैतत्पापशीलोऽहमद्ययत्रं क्षुत्पिपासितः ॥ षष्ठे षष्ठे नृशंसात्मा भक्षयिष्यामि निर्घृणः ॥ ५५ ॥ एवमुक्तो मुनिसुतस्तेन घोरेण रक्षसा॥चिन्तामवाप महतीमशक्तस्तदुदीरणे॥५६॥स विमृश्य चिरं विप्रः शरणं जातवेदसम्॥जगाम ज्ञानदानाय संशयं परमं गतः॥५७॥ यदि शुश्रूषितो वह्निर्गुरुशुश्रूषणादनु॥व्रतानि वा सुचीर्णानि सप्तार्चिः पातु मां ततः॥५८॥ न मातरं न पितरं गौरवेण यथा गुरुम्॥ यथाऽहमवगच्छामि तथा मां पातु पावकः ॥५९॥ यथा गुरुं न मनसा कर्मणा मनसाऽपि च ॥

अवजानाम्यहं तेन पातु मां तेन पावकः ॥ ६० ॥ इत्येवं मनसा सत्यं कुर्वतः शपथान्मुने ॥ सप्तार्चिषा समादिष्टा प्रादु
रासीत्सरस्वती ॥ ६१ ॥ सा प्रोवाच द्विजसुतं राक्षसग्रहणाकुलम् ॥ मा भैर्द्विजसुताहं त्वां मोक्षयाम्यद्य संकटात् ॥ ६२ ॥
यदस्य रक्षसः श्रेयो जिह्वाग्रे संस्थिता तव ॥ तत्सर्वं कथयिष्यामि ततो मोक्षमवाप्स्यसि ॥ ६३ ॥ अदृश्या रक्षसा तेन प्रोक्त्वे-
त्थं च सरस्वती ॥ अदर्शनं गता सोऽपि द्विजः प्राह निशाचरम् ॥ ६४ ॥[ब्राह्मण उवाच]॥ श्रूयतां तव यच्छ्रेयस्तथाऽन्येषां च
पापिनाम् ॥ समस्तपापशुद्ध्यर्थं पुण्योपचयदं च यत् ॥ ६५ ॥ प्रातरुत्थाय जप्तव्यं मध्याह्नेऽह्नः क्षयेऽपि वा ॥ असंशयं
सदाजापो जपतां पुष्टिशान्तिदः ॥ ६६ ॥ ॐ हरिं कृष्णं हृषीकेशं वासुदेवं जनार्दनम् ॥ प्रणतोऽस्मि जगन्नाथं स मे पापं
व्यपोहतु ॥ ६७ ॥ चराचरगुरुं नाथं गोविन्दं शेषशायिनम् ॥ प्रणतोऽस्मि परं देवं स मे पापं व्यपोहतु ॥ ६८ ॥ शङ्खिनं चक्रिणं
शार्ङ्गधारिणं स्रग्धरं परम् ॥ प्रणतोऽस्मि पतिं लक्ष्म्याः स मे पापं व्यपोहतु ॥ ६९ ॥ दामोदरमुदारं तं पुण्डरीकाक्षमच्युतम् ॥
प्रणतोऽस्मि स्तुतं स्तुत्यैः स मे पापं व्यपोहतु ॥ ७० ॥ नारायणं नरं शौरिं माधवं मधुसूदनम् ॥ प्रणतोऽस्मि धराधारं स
मे पापं व्यपोहतु ॥७१॥ केशवं केशिहन्तारं कंसारिष्टनिषूदनम् ॥ प्रणतोऽस्मि महाबाहुं स मे पापं व्यपोहतु ॥७२॥ श्रीवत्सवक्षसं
श्रीशं श्रीधरं श्रीनिकेतनम् ॥ प्रणतोऽस्मि श्रियः कान्तं स मे पापं व्यपोहतु ॥७३॥ यमीशं सर्वभूतानां ध्यायन्ति यतयोऽक्षरम् ॥
वासुदेवमनिर्देश्यं तमस्मि शरणं गतः॥७४॥समस्तालम्बनेभ्यो यं व्यावृत्य मनसो गतिम्॥ध्यायन्ति वासुदेवाख्यं तमस्मि शरणं

गतः॥७५॥सर्वगं सर्वभूतं च सर्वस्याधारमीश्वरम्॥वासुदेवं परं ब्रह्म तमस्मि शरणागतः॥७६॥परमात्मानमव्यक्तं यं यान्ति च सुमे-
धसः॥कर्मक्षयेऽक्षयं देवं तमस्मि शरणं गतः॥७७॥पुण्यपापविनिर्मुक्तो यं प्राप्य च पुनर्भवम् ॥ न योगिनः प्राप्नुवन्ति तमस्मि शरणं
गतः॥७८॥ब्रह्म भूत्वा जगत्सर्वं सदेवासुरमानुषम् ॥ यः सृजत्यच्युतो देवांस्तमस्मि शरणं गतः ॥७९॥ ब्रह्मत्वं यस्य वक्रेभ्यश्चतुर्वेद-
मयं वपुः॥ वपुः प्रभोः परो जज्ञे तमस्मि शरणं गतः ॥८०॥ ब्रह्मरूपधरं देवं जगद्योनिं जनार्दनम् ॥ स्रष्टृत्वे संस्थितं सृष्टौ तं नतो
ऽस्मि जनार्दनम् ॥८१॥ धृता मही हता दैत्याः परित्रातास्तथाऽमराः ॥ येन तं विष्णुमादेश्य प्रणतोऽस्मि जनार्दनम्॥८२॥यज्ञैर्य-
जन्ति यं विप्रा यज्ञेशं यज्ञभावनम् ॥ तं यज्ञपुरुषं विष्णुं प्रणतोऽस्मि जनार्दनम् ॥८३॥ पातालवीथीभूतानि तथा लोकान्निहन्ति
यः॥तमन्तपुरुषं रुद्रं प्रणतोऽस्मि जनार्दनम् ॥८४॥ संभक्षयित्वा सकलं यथासृष्टमिदं जगत्॥ यो वै नृत्यति रुद्रात्मा प्रणतोऽस्मि
जनार्दनम् ॥८५॥ सुरासुराः पितृगणा यक्षगन्धर्वराक्षसाः ॥ यस्यांशभूता देवस्य सर्वगं तं नमाम्यहम् ॥८६॥ समस्तदेवाः सकला
मनुष्याणां च जातयः ॥ यस्यांशभूता देवस्य सर्वगं तं नमाम्यहम् ॥ ८७ ॥ वृक्षगुल्मादयो यस्य तथा पशुमृगादयः ॥एकांश-
भूता देवस्य सर्वगं तं नमाम्यहम् ॥ ८८ ॥ यस्मान्नान्यत्परं किंचिद्यस्मिन्सर्वं महात्मनि ॥ यः सर्वमव्ययोऽनन्तः सर्वगं तं नमाम्य-
हम् ॥ ८९ ॥यथा सर्वेषु भूतेषु गूढोऽग्निरिह दारुषु ॥ विष्णुरेवं तथा पापं ममाशेषं प्रणश्यतु ॥९०॥ यथा सर्वमयं विष्णुं ब्रह्मादि
सचराचरम् ॥ यच्च ज्ञानपरिच्छेद्यं पापं नश्यतु मे तथा ॥ ९१ ॥ शुभाशुभानि कार्याणि रजःसत्त्वतमांसि च ॥ अनेकजन्म-

कर्मोत्थं पापं नश्यतु मे तथा ॥ ९२ ॥ यन्निशायां च यत्प्रातर्यन्मध्याह्नापराह्णयोः ॥ संध्ययोश्च कृतं पापं कर्मणा मनसा गिरा ॥९३॥ यत्तिष्ठता यद्व्रजता यच्च शय्यागतेन मे ॥ कृतं यदशुभं कर्म कायेन मनसाऽपि वा ॥ ९४ ॥ अज्ञानतो ज्ञानतो वा मदाच्चलितमानसैः॥ तत्क्षिप्रं विलयं यातु वासुदेवस्य कीर्तनात्॥९५॥परदारपरद्रव्यवाञ्छाद्रोहोद्भवं च यत् ॥ परपीडोद्भवां निन्दां कुर्वता यन्महात्मनाम् ॥ ९६ ॥ यच्च भोज्ये तथा पेये भक्ष्ये चोष्ये विलेहने ॥ तद्यातु विलयं तोये यथा लवणभाजनम् ॥ ९७॥ यद्बाल्ये यच्च कौमारे यत्पापं यौवने मम ॥ वयःपरिणतौ यच्च यच्च जन्मान्तरे कृतम् ॥ ९८ ॥तन्नारायण गोविन्द हरे कृष्णेति कीर्तनात्॥प्रयातु विलयं तोये यथा लवणभाजनम् ॥९९॥ विष्णवे वासुदेवाय हरये केशवाय च ॥ जनार्दनाय कृष्णाय नमो भूयो नमो नमः ॥ १०० ॥ भविष्यन्नरकघ्नाय नमः कंसविघातिने ॥ अरिष्टकेशिचाणूरदेवारिक्षयिणे नमः ॥ १०१ ॥ कोऽन्यो बलेर्वञ्चयिता त्वामृते वै भविष्यति ॥ कोऽन्यो बलान्नाशयिता दर्पं हैहयभूपतेः ॥१०२॥ कः करिष्यति चान्यो वै सागरे सेतुबन्धनम् ॥ वधिष्यति दशग्रीवं कः सामात्यपुरःसरम् ॥ १०३ ॥ कस्त्वामृतेऽन्यो नन्दस्य गोकुले रतिमेष्यति ॥ प्रलम्बपूतनादीनां त्वामृते मधुसूदन ॥ नियन्ताऽप्यथवा शास्ता देवदेव भविष्यति ॥ १०४ ॥ जपत्येवं नरः पुण्यं वैष्णवं धर्ममुत्तमम्॥ इष्टानिष्टप्रसङ्गेभ्यो ज्ञानतोऽज्ञानतोऽपि वा ॥ १०५ ॥ कृतं तेन तु यत्पापं सप्तजन्मान्तरेण वै ॥ महापातकसंज्ञं वा तथा चैवोपपातकम् ॥ १०६ ॥ यज्ञादीनि च पुण्यानि जपहोमव्रतानि च॥ नाशयेद्योगिनां सर्वमामपात्रमिवाम्भसि॥१०७॥नरः संवत्सरं पूर्णांतिलपात्राणि षोडश॥

मुमुक्षूणां स्वर्गादिरूपाणि तत्फलानि नाशयेदित्यर्थः ।

अहन्यहनि यो दद्यात्पठत्येतच्च तत्समम् ॥ १०८ ॥ अविप्लुतब्रह्मचर्यं संप्राप्य स्मरणं हरेः ॥ विष्णुलोकमवाप्नोति सत्यमेतन्म योदितम् ॥ १०९ ॥ तदेतत्सत्यमुक्तं मे न ह्यल्पमपि वै मृषा ॥ राक्षसग्रस्तसर्वाङ्गं तथा मामेष मुञ्चतु ॥११०॥ [ पुलस्त्य उवाच ]॥ एवमुच्चारिते तेन मुक्तो विप्रस्तु रक्षसा ॥ अकामेन द्विजो भूयस्तमाह रजनीचरम् ॥ १११ ॥ [ ब्राह्मण उवाच ]॥ एतद्भद्र मयाऽऽख्यातं तव पातकनाशनम् ॥ विष्णोः सारस्वतं स्तोत्रं यदूचे सरस्वती ॥ ११२ ॥ हुताशनेन दीप्ता च मम जिह्वाग्रसंस्थिता ॥ जगादेमं स्तवं विष्णोः सर्वेषां चोपशान्तिदम् ॥ ११३ ॥ अनेनैव जगन्नाथं त्वमाराधय केशवम् ॥ ततः शापापनोदं तु स्तुते लप्स्यसि केशवे ॥ ११४ ॥ प्रत्यहं त्वं हृषीकेशस्तवेनानेन राक्षस ॥ स्तुत्वा भक्तिं दृढां कृत्वा ततः पापात्प्रमोक्ष्यसे ॥ ११५ ॥ स्तुतो हि सर्वपापानि नाशयिष्यत्यसंशयम् ॥ स्तुतो हि भक्त्या नृणां स सर्वपापहरो हरिः ॥ ११६ ॥ [ पुलस्त्य उवाच ]॥ ततः प्रणम्य तं विप्रमासाद्य च निशाचरः ॥ तदैव तपसे श्रीमान्शालिग्राममगाद्बली ॥ ११७ ॥ अहर्निशं स एवैनं जपन्सारस्वतं स्तवम् ॥ देवक्रियारतिर्भूत्वा तपस्तेपे निशाचरः ॥ ११८ ॥ समाराध्य जगन्नाथं स तत्र पुरुषोत्तमम् ॥ सर्वपापविनिर्मुक्तो विष्णुलोकमगाच्छुभम् ॥११९॥ एतत्ते कथितं ब्रह्मन्विष्णोः सारस्वतं स्तवम्॥ विप्रवक्त्रस्थया सम्यक्सरस्वत्या समीरितम् ॥ १२० ॥ य एतत्परमं स्तोत्रं वासुदेवस्य मानवः ॥ पठिष्यति स सर्वेभ्यो दुःखेभ्यो मोक्षमाप्स्यति॥१२१॥इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे सारस्वतस्तोत्रं नाम षडशीतितमोऽध्यायः ॥८६॥

पुलस्त्य उवाच ॥ नमस्तेऽस्तु जगन्नाथ देवदेव नमोऽस्तु ते ॥ वासुदेव नमस्तेऽस्तु बहुरूप नमोऽस्तु ते ॥ १ ॥ एकशृङ्ग नमस्तुभ्यं नमस्तुभ्यं वृषाकपे ॥ श्रीनिवास नमस्तेऽस्तु नमस्ते भूतभावन ॥ २ ॥ विष्वक्सेन नमस्तुभ्यं नारायण नमोऽस्तु ते ॥ वृषध्वज नमस्तेऽस्तु सत्यध्वज नमोऽस्तु ते ॥३॥ यज्ञध्वज नमस्तुभ्यं धर्मध्वज नमोऽस्तु ते ॥ तालध्वज नमस्तेऽस्तु नमस्ते गरुडध्वज ॥ ४ ॥ वरेण्य विष्णो वैकुण्ठ नमस्ते पुरुषोत्तम ॥ नमो जयन्त विजय जयानन्तापराजित ॥ ५ ॥ कृतावर्त महावर्त महादेव नमोऽस्तु ते ॥ अनाद्याद्यन्तमध्यान्त नमस्ते पद्मजप्रिय ॥ ६ ॥ पुरञ्जय नमस्तुभ्यं शत्रुञ्जय नमोऽस्तु ते ॥ धनञ्जय नमस्तेऽस्तु शुभञ्जय नमोऽस्तु ते ॥ ७ ॥ सृष्टिगर्भ नमस्तुभ्यं शुचिश्रवः पृथुश्रवः ॥ नमो हिरण्यगर्भाय पद्मगर्भाय ते नमः ॥८॥ नमः कमलनेत्राय कालनेत्राय वै नमः॥कालनाभ नमस्तुभ्यं महानाभ नमोऽस्तु ते ॥९॥ वृष्णिमूल महामूल मूलावास नमोऽस्तु ते॥ धर्मावास जलावास श्रीनिवास नमोऽस्तु ते॥१०॥ धर्माध्यक्ष प्रजाध्यक्ष लोकाध्यक्ष नमोऽस्तु ते॥सेनाध्यक्ष नमस्तुभ्यं कालाध्यक्ष नमोऽस्तु ते ॥ ११ ॥ गदाधर श्रुतिधर चक्रधारिन्श्रियो धर ॥ वनमालाधर हरे नमस्ते धरणीधर ॥ १२ ॥ आर्ष्टिषेण महासेन नमस्तेऽस्तु पुरुष्टुत ॥ बहुकल्प महाकल्प नमस्ते कल्पनामुख ॥ १३ ॥ सर्वात्मन्सर्वग विभो विरिञ्चे श्वेत केशव ॥ नमो नील महानील अनिरुद्ध नमोऽस्तु ते ॥ १४ ॥ द्वादशात्मक कालात्मन्सामात्मन्परमात्मक ॥ व्योमार्कात्मक सुब्रह्मन्सूक्ष्मात्मक नमोऽस्तु ते ॥ १५ ॥ हरिकेश महाकेश गुडाकेश नमोऽस्तु ते ॥ मुञ्जकेश हृषीकेश सर्वनाथ नमोऽस्तु ते ॥ १६ ॥

सूक्ष्म स्थूल महास्थूल महासूक्ष्म भयंकर ॥ श्वेत पीताम्बरधर नीलवासो नमोऽस्तु ते ॥ १७ ॥ कुशेशय नमस्तेऽस्तु पद्मेशय जलेशय ॥ गोविन्द प्रीतिकर्तश्च हंस पीताम्बरप्रिय ॥ १८॥ अधोक्षज नमस्तेऽस्तु शार्ङ्गध्वज जनार्दन ॥ वामनाय नमस्तुभ्यं नमस्ते मधुसूदन ॥ १९ ॥ सहस्रशीर्षाय नमो ब्रह्मशीर्षाय वै नमः ॥ नमः सहस्रनेत्राय सोमसूर्यानलेक्षण ॥ २० ॥ नमश्चाथर्वशिरसे महाशीर्षाय ते नमः ॥ नमस्ते धर्मनेत्राय महानेत्राय ते नमः ॥ २१ ॥ नमः सहस्रपादाय सहस्रभुजमन्यवे ॥ नमो यज्ञवराहाय महारूपाय ते नमः ॥२२॥ नमस्ते विश्वदेवाय विश्वात्मन्विश्वसंभव ॥ विश्वरूप नमस्तेऽस्तु त्वत्तो विश्वमभूदिदम् ॥२३॥ न्यग्रोधस्त्वं महाशाखस्त्वं मूलकुसुमार्चितः ॥ स्कन्धपत्राङ्कुरलतापल्लवाय नमोऽस्तु ते ॥२४॥ मूलं ते ब्राह्मणाः स्कन्धाः क्षत्रिया भवतः प्रभो ॥ वैश्याः शाखास्त्वचः शूद्रास्ते नमोऽस्तु वनस्पते ॥ २५ ॥ ब्राह्मणाः साग्नयो वक्त्रात्सायुधा बाहुतो नृपाः ॥ पार्श्वाद्विशश्चोरुयुगाज्जाताः शूद्राश्च पादतः ॥ २६ ॥ नेत्राद्भानुरभूत्त्वत्तः पद्भ्यां भूः श्रोत्रयोर्दिशः ॥ नाभ्याश्चाभूदन्तरिक्षं शशाङ्को मनसस्तव ॥ २७ ॥ प्राणाद्वायुः समभवत्कामाद्ब्रह्मा पितामहः ॥ क्रोधात्त्रिणयनो रुद्रः शीर्ष्णो द्यौः समवर्तत ॥ २८ ॥ इन्द्राग्नी वदनाज्जातौ पशवो मलसंभवाः ॥ ओषध्यो रोमसंभूता विरजास्त्वं नमोऽस्तु ते ॥ २९ ॥ पुष्पहास नमस्तेऽस्तु महाहास नमोऽस्तु ते ॥ ॐकारस्त्वं वषट्कारो वौषट् त्वं च सुधा स्वधा ॥ ३० ॥ स्वाहाकार नमस्तुभ्यं हन्तकार नमोऽस्तु ते ॥ सर्वाकार निराकार वेदाकार नमोऽस्तु ते ॥ ३१ ॥ त्वं हि वेदमयो देवः सर्वदेवमय-

स्तथा ॥ सर्वतीर्थमयश्चैव सर्वयज्ञमयो रसः ॥ ३२॥ नमस्ते यज्ञपुरुष यज्ञभागभुजे नमः ॥ नमः सहस्रधाराय शतधारा-
य ते नमः ॥ ३३ ॥ भूर्भुवःस्वःस्वरूपाय गोदायामृतदायिने ॥ सुवर्णब्रह्मदात्रे च सर्वधात्रे च ते नमः ॥ ३४ ॥ ब्रह्मेशाय नम-
स्तुभ्यं ब्रह्मणे ब्रह्मरूपधृक् ॥ परं ब्रह्म नमस्तेऽस्तु शब्दब्रह्म नमोऽस्तु ते ॥ ३५ ॥ विद्या त्वं वेद्यरूपस्त्वं वन्दनीयस्त्वमेव च ॥
बुद्धिस्त्वमपि बोध्यश्च बोद्धा त्वं च नमोऽस्तु ते ॥ ३६ ॥ होता होमश्च हव्यं च हूयमानश्च हव्यवाट् ॥ पाता पोता च पूतश्च
पावनीयश्च ॐ नमः ॥३७॥ हन्ता च हन्यमानश्च क्रियमाणस्त्वमेव च ॥ हर्ता नेता च नीतिश्च पूज्योऽग्र्यो विश्वधार्यपि ॥३८॥
स्रुक्स्रुवौ विश्वधामाऽसि कपालोलूखलोऽरणिः ॥ यज्ञपात्रारणे यस्त्वमेकधा बहुधा त्रिधा ॥ ३९ ॥ यज्ञस्त्वं यजमानस्त्वमीड्य-
स्त्वमसि याजकः ॥ ज्ञाता ज्ञेयस्तथा ज्ञानं ध्याता ध्येयोऽसि चेश्वर ॥ ४० ॥ ध्यानयोगश्च योगी च गतिर्मोक्षो धृतिः सुखम् ॥
योगाङ्गानि त्वमीशानः सर्वगस्त्वं नमोऽस्तु ते ॥ ४१ ॥ ब्रह्मा होता तथोद्गाता सोमयूपोऽथ दक्षिणा ॥ दीक्षा त्वं त्वं पुरोडाश-
स्त्वं पशुः पशुहा ह्यसि ॥ ४२ ॥ गुह्यो धाता परमसि नरो नारायणस्तथा ॥ महाजनो निरयणः सहस्रार्केन्दुरूपवान् ॥ ४३ ॥
द्वादशारोऽथ षण्णाभिस्त्रिव्यूहो द्विगुणस्तथा ॥ कालचक्रो महामेधाः शंभुः शक्रः प्रभञ्जनः ॥ ४४ ॥ मित्रावरुणमूर्तिस्त्वममूर्ति-
रनघः शुभः ॥ प्राग्वंशकायो भूतादिर्महाभूतोऽच्युतो द्विजः ॥४५॥ त्वमूर्ध्वकेतोर्ध्वधर ऊर्ध्वरेता नमोऽस्तु ते ॥ महापातकहा त्वं
च उपपातकहा तथा ॥ ४६ ॥ मुनीशः सर्वपापघ्नस्त्वामहं शरणं गतः ॥ इत्येतत्परमं स्तोत्रं सर्वपापप्रमोचनम् ॥ ४७ ॥ महेश्व-

रेण कथितं वाराणस्यां पुरा मुने ॥ केशवस्याग्रतो गत्वा स्नात्वा तीर्थोदके शुभे ॥ ४८ ॥ उपशान्तस्तदा जातो रुद्रः पापोपशा न्तिदम् ॥ एतत्पवित्रं त्रिपुरघ्नभाषितं पठन्नरो विष्णुपुरे महर्षे ॥ विमुक्तपापोऽप्युपशान्तमूर्तिः संपूज्यते देववरैः ससिद्धैः ॥४९॥ इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे पापप्रशमनस्तवो नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ पुलस्त्य उवाच ॥ द्वितीयं पापशमनं स्तवं वक्ष्यामि ते मुने ॥ येन सम्यगधीतेन पापनाशं तु गच्छति ॥ १ ॥ मत्स्यं नमस्ये देवेशं कूर्मं देवेशमेव च ॥ हयशीर्षं नमस्येऽहं भवं विष्णुं त्रिविक्रमम् ॥२॥ नमस्ये माधवेशानौ हृषीकेशकुमारिलौ ॥ नारायणं नमस्ये ऽहं नमस्ते गरुडासनम् ॥ ३ ॥ जयेशं नरसिंहं च रूपधारं कुरुध्वजम् ॥ कामपालमखण्डं च नमस्ये ब्राह्मणप्रियम् ॥४॥ अजितं विश्वकर्माणं पुण्डरीकं द्विजप्रियम् ॥ हरिं शंभुं नमस्ये च ब्रह्माणं सप्रजापतिम् ॥ ५ ॥ नमस्ये शूलबाहुं च देवं चक्रधरं तथा ॥ शिवं विष्णुं सुवर्णाक्षं गोपतिं पीतवाससम् ॥ ६ ॥ नमस्ये च गदापाणिं नमस्ये च कुशेशयम् ॥ अर्धनारीश्वरं देवं नमस्ये पापनाशनम् ॥ ७ ॥ गोपालं च सवैकुण्ठं नमस्ये चापधारिणम् ॥ नमस्ये विष्णुरूपं च ज्येष्ठेशं पश्चिमं तथा ॥ ८ ॥ उपशान्तं नमस्येऽहं मार्कण्डेयं सजम्बुकम् ॥ नमस्ये पद्मकिरणं नमस्ये वडवामुखम् ॥ ९ ॥ कार्त्तिकेयं नमस्येऽहं बाह्लिकं शङ्खिनं तथा॥ नमस्ये पद्मकिरणं नमस्ये च कुशेशयम् ॥ १० ॥ नमस्ये स्थाणुमनघं नमस्ये वनमालिनम् ॥ नमस्ये लाङ्गलीशं च नमस्ये ऽहं श्रियः पतिम् ॥ ११ ॥ नमस्ये च त्रिणयनं नमस्ये हव्यवाहनम् ॥ नमस्ये च त्रिसौवर्णं नमस्ये धरणीधरम् ॥ १२ ॥

त्रिणाचिकेतं ब्रह्माणं नमस्ये शशिभूषणम्॥कपर्दिनं नमस्ये च सर्वामयविनाशनम् ॥१३॥ नमस्ये शशिनं सूर्यं ध्रुवं रुद्रं महौजसम्॥
पद्मनाभं हिरण्याक्षं नमस्ये स्कन्दमव्ययम्॥१४॥नमस्येऽहं भीमहंसौ नमस्ये हाटकेश्वरम्॥ सदाहंसं नमस्ये च नमस्ये प्राणतर्पणम्॥
॥ १५ ॥ नमस्ये रुक्मकवचं महायोगिनमीश्वरम् ॥ नमस्ये श्रीनिवासं च नमस्ये पुरुषोत्तमम् ॥१६॥ नमस्ये च चतुर्बाहुं नमस्ये
च सुधाधिपम् ॥ वनस्पतिं मधुपतिं नमस्ये मनुमव्ययम् ॥१७ ॥श्रीकण्ठं वासुदेवं च नीलकण्ठं सदाशिवम् ॥ नमस्ये शर्वमनघं
गौरीशं लकुडेश्वरम्॥१८॥ मनोहरं च कृष्णेशं नमस्ये चक्रपाणिनम् ॥यशोधनं महाबाहुं नमस्ये च कुशप्रियम् ॥१९॥ भूधरं छादि-
तगदं सुनेत्रं सुरशंसितम् ॥ भद्राक्षं वीरभद्रं च नमस्ये शङ्कुकर्णिनम् ॥२०॥ वृषध्वजं महेशं च विश्वमित्रं शशिप्रभम् ॥ उपेन्द्रं च सगो-
विन्दं नमस्ये पङ्कजप्रियम् ॥२१॥ सहस्रशिरसं देवं नमस्ये कुन्दमालिनम् ॥ कालाग्निं रुद्रदेवेशं नयस्ये कृत्तिवाससम् ॥ २२ ॥
नमस्ये छागलेशं च नमस्ये पङ्कजासनम् ॥ सहस्राक्षं कोकनदं नमस्ये हरिशंकरम् ॥ २३ ॥ अगस्त्यं गरुडं विष्णुं कपिलं ब्रह्म-
वाङ्मयम् ॥ सनातनं च ब्रह्माणं नमस्ये ब्रह्म तत्परम् ॥ २४ ॥ अप्रतर्क्यं चतुर्बाहुं सहस्रांशुं तपोमयम् ॥ नमस्ये धर्मराजानं
देवं गरुडवाहनम् ॥ २५ ॥ सर्वभूतगतं शान्तं निर्मलं सर्वलक्षणम् ॥ महायोगिनमव्यक्तं नमस्ये पापनाशनम् ॥ २६ ॥ निरञ्जनं
निराकारं निर्गुणं निलयं पदम् ॥ नमस्ये पापहर्तारं शरण्यं शरणं व्रजे ॥ २७ ॥ एतत्पवित्रं परमं पुराणं प्रोक्तं त्वगस्त्येन मह-
र्षिणा च ॥ धन्यं यशस्यं बहुपापनाशनं संकीर्तनात्स्मरणात्स्पर्शनाच्च ॥ २८ ॥ इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामन

प्रादुर्भावे प्रह्लादतीर्थयात्रायां द्वितीयः पापनाशनस्तवो नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥ [ पुलस्त्य उवाच ]॥ गतेऽथ तीर्थ-
यात्रायां प्रह्लादे दानवेश्वरे ॥ कुरुक्षेत्रं समभ्यागाद्द्रष्टुं वैरोचनो बलिः ॥ १ ॥ तस्मिन् महाधर्मयुते तीर्थे ब्राह्मणपुंगवः ॥ शुक्रो द्विजा-
तिप्रवरानामन्त्रयत भार्गवः ॥ २ ॥ भृगुणाऽऽमन्त्र्यमाणा वै श्रुत्वाऽऽत्रेयाः सगौतमाः ॥ कौशिकाङ्गिरसश्चैव तत्त्वज्ञाः कुरुजाङ्ग-
लान् ॥ ३ ॥ उत्तराशां प्रजग्मुस्ते नदीमनु शतद्रवीम् ॥ शातद्रवे जले स्नात्वा विप्रास्ते प्रययुस्ततः ॥ ४ ॥ विधाय तत्र सुस्नानं
संपूज्य पितृदेवताः ॥ प्रजग्मुः किरणां पुण्यां दिनेशकिरणच्युताम् ॥ ५ ॥ तस्यां स्नात्वा च देवर्षे सर्व एव महर्षयः ॥ ऐरावतीं
सुपुण्योदां स्नात्वा जग्मुरथेश्वरीम् ॥ ६ ॥ देविकाया जले स्नात्वा पयोष्ण्याश्चैव तापसाः ॥ अवतीर्णा मुने स्नातुमात्रेयाद्या-
स्तु तां नदीम् ॥ ७ ॥ ततो निमग्ना ददृशुः प्रतिबिम्बमथात्मनः ॥ अन्तर्जले द्विजश्रेष्ठ महदाश्चर्यकारकम् ॥८॥ उन्मज्जन्तश्च
ददृशुः पुनर्विस्मितमानसाः ॥ ततः स्नात्वा समुत्तीर्णा ऋषयः सर्व एव हि ॥ ९ ॥ जग्मुस्ततोऽपि ते ब्रह्मन्कथयन्तः परस्परम् ॥
चिन्तयन्तश्च सततं किमेतदिति विस्मिताः ॥ १० ॥ ततोऽदूरादपश्यंस्ते वनषण्डं सुविस्तृतम् ॥ घनं घनदलश्यामं खगश्रमवि-
नाशनम् ॥ ११ ॥ अतितुङ्गतया व्योम आवृण्वानं नरोत्तम ॥ विस्तृताभिर्लताभिस्तु अन्तर्भूमिं च नारद ॥ १२ ॥ काननं पुष्पि-
तैर्वृक्षैः फलितैश्च ततस्ततः ॥ दशार्धबाणसदृशैर्नभस्तारागणैरिव ॥ १३ ॥ तद् दृष्ट्वा कमलैर्व्याप्तं पुण्डरीकैश्च शोभितम् ॥ तद्वत्को-
कनदैर्व्याप्तं वनं पद्मवनं यथा ॥१४॥ प्रजग्मुस्तुष्टिमतुलां ते ह्लादं परमं ययुः ॥ विविशुः प्रीतमनसो हंसा इव महासरः ॥ १५ ॥

तन्मध्ये ददृशुः पुण्यमाश्रमं लोकपूजितम् ॥ चतुर्णां लोकपालानां वर्गाणां मुनिसत्तमाः ॥ १६ ॥ धर्माश्रमं प्राङ्मुखं तु पलाश
विटपावृतम् ॥ प्रतीच्यभिमुखं ब्रह्मन्नथ पुण्यवनावृतम् ॥१७॥ दक्षिणाभिमुखं काम्यं रम्भाशोकवनावृतम्॥ उदङ्मुखं च मोक्षस्य
शुद्धस्फटिकसन्निभम्॥१८॥कृतान्ते त्वाश्रमी मोक्षः कामस्त्रेतायुगे स्थितः ॥ आश्रम्यर्थो द्वापरान्ते तिष्यान्ते धर्म आश्रमी॥१९॥
तमाश्रमं हि मुनयो दृष्ट्वाऽऽत्रेयास्ततोऽव्ययाः ॥ तत्रैव हि रतिं चक्रुरखण्डे सलिलाप्लुते ॥ २० ॥ धर्माद्यो भगवान्विष्णुरखण्ड
इति विश्रुतः ॥ चतुर्मूर्तिर्जगन्नाथः पूर्वमेव प्रतिष्ठितः ॥ २१ ॥ तमर्चयन्ति ऋषयो योगात्मानो बहुश्रुताः ॥ शुश्रूषया च तपसा
ब्रह्मचर्येण नारद ॥ २२ ॥ एवं ते न्यवसंस्तत्र समेता भार्गवेण हि ॥ असुरेभ्यस्तदा भीतास्त्वाश्रिताः खण्डपर्वताः ॥ २३ ॥
तथाऽन्ये ब्राह्मणा ब्रह्मन्नश्मकुट्टा मरीचिपाः ॥ स्नात्वा जले हि कालिन्द्याः प्रजग्मुर्दक्षिणामुखाः ॥ २४ ॥ अवन्तीविषयं
प्राप्य विष्णुमासाद्य संस्थिताः ॥ विष्णोरपि प्रसादेन दुष्प्रवेशं महासुरैः ॥ २५ ॥ वालखिल्यादयो जग्मुरवशा दानवाद्भ-
यात् ॥ रुद्रकोटिं समाश्रित्य स्थितास्ते ब्रह्मचारिणः ॥ २६ ॥ एवं गतेषु विप्रेषु गौतमाङ्गिरसादिषु ॥ शुक्रस्तु भार्ग-
वान्सर्वान्निन्ये यज्ञविधौ मुने ॥ २७ ॥ अधिष्ठितो भार्गवेण महायज्ञेऽमितद्युते ॥ यज्ञदीक्षां बलेः शुक्रश्चकार विधिना
स्वयम् ॥ २८ ॥ श्वेताम्बरधरो दैत्यः श्वेतमाल्यानुलेपनः ॥ मृगाजिनास्तृतपृष्ठो बर्हपत्रविचित्रकः ॥ २९ ॥ समास्ते
वितते यज्ञे सदस्यैरभिसंवृतः ॥ हयग्रीवश्चुराद्यैस्तु मयबाणपुरोगमैः ॥ ३० ॥ पत्नी विन्ध्यावली तस्य दीक्षिता यज्ञ,

कर्मणि ॥ ललनानां सहस्रस्य प्रधानमृषिकन्यका ॥ ३१ ॥ शुक्रेणाश्वः श्वेतवर्णो मधुमासे सुलक्षणः ॥ महीं चरि-
तुमुत्सृष्टस्तारकाक्षस्त्वगाच्च तम् ॥ ३२ ॥ एवमश्वे समुत्सृष्टे वितते यज्ञकर्मणि ॥ गते च मासत्रितये ह्रियमाणे
च पावके ॥३३॥ पूज्यमानेषु दैत्येषु मिथुनस्थे दिवाकरे ॥ सुषुवे देवजननी माधवं वामनाकृतिम् ॥ ३४ ॥ संजातमात्रं भगवन्त-
मीशं नारायणं लोकपतिं पुराणम् ॥ ब्रह्मा समभ्येत्य समं महर्षिभिः स्तोत्रं जगादाथ समं महर्षे ॥३५॥ नमोऽस्तु ते माधव सत्त्व-
मूर्ते नमोऽस्तु ते सात्वतविश्वरूप॥नमोऽस्तु ते शत्रुवनेन्धनाग्ने नमोऽस्तु ते पापमहादवाग्ने ॥३६॥ नमोऽस्तु पुण्डरीकाक्ष नमस्ते
विश्वभावन ॥ नमस्ते जगदाधार नमस्ते पुरुषोत्तम ॥ ३७ ॥ नारायण जगन्मूर्ते जगन्नाथ गदाधर ॥ पीतवासः श्रियः कान्त
जनार्दन नमोऽस्तु ते ॥ ३८ ॥ भवांस्त्राता च गोप्ता च विश्वात्मा सर्वगोऽव्ययः ॥ सर्वधारिन्धराधारिन्रूपधारिन्नमोऽस्तु ते ॥ ३९ ॥
वर्धिष्णो वर्द्धिताशेषत्रैलोक्य सुरपूजित ॥ कुरुष्व त्वं देवपते मघोनोऽश्रुप्रमार्जनम् ॥४०॥ त्वं धाता च विधाता च संहर्ता त्वं महे-
श्वर ॥ महालयो महायोगी योगशायी नमोऽस्तु ते ॥ ४१ ॥ इत्थं स्तुतो जगन्नाथः सर्वात्मा सर्वगो हरिः ॥ प्रोवाच भगवान्मह्यं
कुरूपनयनं विभो ॥ ४२ ॥ ततश्चकार देवस्य जातकर्मादिकाः क्रियाः ॥ भारद्वाजो महातेजा बार्हस्पत्यस्तपोधनः ॥ ४३ ॥
व्रतबन्धं तथेशस्य कृतवान्सर्वशास्त्रवित् ॥ ततो ददुः प्रीतियुताः सर्व एव यथाक्रमम् ॥४४॥ यज्ञोपवीतं पुलहः पुलस्त्यः सित-
वाससी ॥ मृगाजिनं कुम्भयोनिर्भरद्वाजस्तु मेखलाम् ॥४५॥ पालाशमददाद्दण्डं मरीचिर्ब्रह्मणः सुतः ॥ अक्षसूत्रं वारुणिस्तु कौश-

वीरमथाङ्गिराः ॥ ४६ ॥ छत्रं ददौ द्युराजश्च उपानद्युगलं भृगुः ॥ कमण्डलुं बृहत्तेजाः प्रादाद्विष्णोर्बृहस्पतिः ॥४७॥ एवं कृतोप-
नयनो भगवान्भूतभावनः ॥ संस्तूयमान ऋषिभिर्वेदान्साङ्गानधीतवान् ॥ ४८ ॥ भारद्वाजात्साङ्गिरसात्सामवेदं महास्वरम् ॥
महदाख्यानसंयुक्तं गान्धर्वसहितं मुने ॥ ४९ ॥ मासेनैकेन भगवाञ्ज्ञातश्रुतिमहार्णवः ॥ लोकाचारप्रवृत्त्यर्थमभूत्स तु विशारदः
॥ ५० ॥ सर्वशास्त्रेषु नैपुण्यं गत्वा देवोऽक्षयोऽव्ययः ॥ प्रोवाच ब्राह्मणश्रेष्ठं भारद्वाजमिदं वचः ॥ ५१ ॥ [ श्रीवामन उवाच ]॥
ब्रह्मन्व्रजामि देह्याज्ञां कुरुक्षेत्रं महोदयम् ॥ तत्र दैत्यपतेः पुण्यो हयमेधः प्रवर्त्तते ॥ ५२ ॥ समाविष्टानि पश्य त्वं तेजांसि पृथिवी-
तले ॥ ये संविधानाः सततं मदंशाः पुण्यवर्धनाः ॥ तेनाहं प्रतिजानामि कुरुक्षेत्रं गतो बलिः ॥५३॥ [ भारद्वाज उवाच ]॥ स्वेच्छया
तिष्ठ गच्छ वा नाहमाज्ञापयामि ते ॥ गमिष्यामो वयं विष्णो बलेरध्वरमाश्रितः ॥ ५४ ॥ यद्भवन्तमहं देव परिपृच्छामि तद्वद ॥
केषु केषु विभो नित्यं स्थानेषु पुरुषोत्तम ॥ सान्निध्यं भवतो ब्रूहि ज्ञातुमिच्छामि तत्त्वतः ॥ ५५ ॥ विष्णुरुवाच ॥ श्रूयतां
कथयिष्यामि येषु येषु गुरो त्वहम् ॥ निवसामि सुपुण्येषु स्थानेषु बहुरूपवान् ॥ ५६ ॥ ममावतारैर्वसुधा नभस्तलं पाताल-
मम्भोनिधयो दिवं च ॥ दिशः समस्ता गिरयोऽम्बुदाश्च व्याप्ता भरद्वाज ममानुरूपैः ॥५७॥ ये दिव्या ये च भौमा जलगगनचराः
स्थावरा ये च ब्रह्मन्सेन्द्राः सार्काः सचन्द्रा यमवसुवरुणा ह्यग्नयः सर्वपालाः ॥ ब्रह्माद्याः स्थावरान्ता द्विजखगसहिता मूर्तिमन्तो
ह्यमूर्तेस्ते सर्वे मत्प्रसूता बहुविविधगुणाः पूरणार्थं पृथिव्याः ॥५८॥ एते हि पुण्याः सुरसिद्धदानवैः पूज्या नराः सन्निहिता महीतले॥

यैर्दृष्टमात्रैः सहसैव नाशं प्रयाति पापं द्विजवर्य कीर्तितैः ॥९१॥ इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे प्रह्लादतीर्थयात्रायां वामन-
प्रादुर्भावे वामनजन्म नाम नवाशीतितमोऽध्यायः ॥८९॥[श्रीभगवानुवाच]॥आद्यं हि मत्स्यरूपं मे संस्थितं मानसे ह्रदे॥सर्वपापक्षय-
करं कीर्तनस्पर्शनादिभिः ॥ १ ॥ कौर्ममन्यत्सन्निधाने कौशिक्याः पापनाशनम्॥हयशीर्षं च कृष्णायां गोविन्दं हस्तिनापुरे ॥२॥
त्रिविक्रमं च कालिन्द्यां लिङ्गभेदे भवं विभुम् ॥ केदारे माधवं शौरिं कुब्जाम्रे कृष्णमूर्द्धजम् ॥३॥ नारायणं बदर्यां च वाराहे गरुड-
ध्वजम् ॥ जयेशं भद्रकर्णे च विपाशायां द्विजप्रियम् ॥ ४ ॥ रूपधारमिरावत्यां कुरुक्षेत्रे कुरुध्वजम् ॥ कृतशौचे नृसिंहं च गोकर्णे
विश्वधारणम् ॥५॥ प्राचीने कामपालं च पुण्डरीकं महाम्भसि ॥ विशाखयूपे ह्यजितं हंसं हंसपदे तथा ॥६॥ पयोष्ण्यां यमखण्डं च
वितस्तायां कुमारिलम्॥ मणिमत्या ह्रदे शंभुं ब्रह्मण्ये च प्रजापतिम् ॥७॥ मधुनद्यां चक्रधरं शूलबाहुं हिमाचले ॥ विद्धि विष्णुं मुनि-
श्रेष्ठ स्थितमौषधसानुनि ॥ ८ ॥ भृगुतुङ्गे सुवर्णाख्यं नैमिषे पीतवाससम् ॥ गयायां गोपतिं देवं गदापाणिं तमीश्वरम् ॥ ९ ॥
त्रैलोक्यनाथं वरदं गोप्रचारं कुशेशयम् ॥ अर्द्धनारीश्वरं चक्रे महीध्रे दक्षिणे गिरौ ॥ १० ॥ गोपालमुत्तरे नित्यं महेन्द्रे सोमपीथि-
नम् ॥ वैकुण्ठमपि सह्याद्रौ पारियात्रेऽपराजितम् ॥ ११ ॥ कशेरुदेशे देवेशं विश्वरूपं तपोधनम् ॥ मलयाद्रौ च सौगन्धिं
विन्ध्यपादे सदाशिवम् ॥ १२ ॥ अवन्तिविषये धिष्ण्यं निषधेष्वमरेश्वरम् ॥ पाञ्चालिकं च ब्रह्मर्षे पाञ्चालेषु सदा स्थितम् ॥
॥ १३ ॥ महोदये हयग्रीवं प्रयागे योगशायिनम् ॥ स्वयंभुवं मधुवने ह्यब्जगन्धं च पुष्करे ॥ १४ ॥ तथैव विप्रप्रवरं वारा

णस्यां च केशवम् ॥ अविमुक्तं च तत्रैव गीयते सुरकिन्नरैः ॥ १५ ॥ पम्पायां पद्मकिरणं समुद्रे वडवामुखम् ॥ कुमारधारे बाह्लीशं
कार्त्तिकेयं च बर्हणे ॥ १६ ॥ ओजसे शम्भुमनघं स्थाणुं च कुरुजाङ्गले ॥ वनमालिनमाहुर्मां किष्किन्धावासिनो जनाः ॥१७॥
वीरं कुवलयारूढं शङ्खचक्रगदाधरम् ॥ श्रीवत्साङ्कमुदाराङ्गं नर्मदायां श्रियः पतिम् ॥ १८ ॥ माहिष्मत्यां त्रिणयनं तत्रैव च
हुताशनम् ॥ अर्बुदे च त्रिसौपर्णं क्ष्माधरं सूकराचले ॥ १९ ॥ त्रिणाचिकेतं ब्रह्मर्षे प्रभासे च कपर्दिनम् ॥ तत्रैवात्रापि च ख्यातं
तृतीयं शशिशेखरम् ॥ २० ॥ उदये शशिनं सूर्यं ध्रुवं च त्रितयस्थितम् ॥ हेमकूटे हिरण्याक्षं स्कन्दं शरवणे मुने ॥ २१ ॥ महा-
लये स्मृतं रुद्रमुत्तरेषु कुरुष्वथ ॥ पद्मनाभं मुनिश्रेष्ठ सर्वसौख्यप्रदायकम् ॥ २२ ॥ सप्तगोदावरे ब्रह्मन्विख्यातं हाटकेश्वरम् ॥
तत्रैव च महाहंसं प्रयागेऽपि महेश्वरम् ॥ २३ ॥ शोणे च रुक्मकवचं कुण्डिने घ्राणतर्पणम् ॥ भिल्लीवने महायोगं मन्त्रेषु पुरुषो-
त्तमम् ॥ २४ ॥ प्लक्षावतरणे विश्वं श्रीनिवासं द्विजोत्तम ॥ शूर्पारके चतुर्बाहुं मगधायां सुधापतिम् ॥ २५ ॥ गिरिव्रजे पशुपतिं
श्रीकण्ठं यमुनातटे ॥ वनस्पतिं समाख्यातं दण्डकारण्यवासिनम् ॥२६॥ कालञ्जरे नीलकण्ठं सरय्वामप्यनुत्तमम् ॥ हंसयुक्तं महा-
कोश्यां सर्वपापप्रणाशनम् ॥ २७ ॥ गोकर्णे दक्षिणे शर्वं वासुदेवं प्रजामुखे ॥ विन्ध्यशृङ्गे महागौरं कन्थायां मधुसूदनम् ॥
॥ २८ ॥ त्रिकूटशिखरे ब्रह्मंश्चक्रपाणिनमीश्वरम् ॥ लोहदण्डे हृषीकेशं कोशलायां महोदयम् ॥ २९ ॥ महावासं सुराष्ट्रे च नव-
राष्ट्रे यशोधरम् ॥ भूधरं देविकानद्यां विदेहायां कुशप्रियम्॥३०॥गोमत्यां छादितगदं शङ्खोद्धारे च शङ्खिनम् ॥ सुनेत्रं सैन्ध-

वारण्ये शूरं शूरपुरे स्थितम् ॥३१॥ रुद्राख्यं च हिरण्वत्यां वीरभद्रं त्रिविष्टपे ॥ शङ्कुकर्णे च नीलाभं भीमं शालवने विदुः॥३२॥ विश्वामित्रं च घटिते कैलासे वृषभध्वजम् ॥ महेशं महिलाशैले कामरूपं शशिप्रभम् ॥३३॥ वलभ्यामपि गोमित्रं कटाहे ब्राह्मण प्रियम् ॥ उपेन्द्रं सिंहलद्वीपे शक्राह्वे कुन्दमालिनम् ॥३४॥ रसातले च विख्यातं सहस्रशिरसं मुने ॥ कालाग्निं कपिलं चैव तथा ऽन्यं कृत्तिवाससम् ॥ ३५ ॥ सुतले कूर्ममचलं वितले पङ्कजाननम् ॥ महातले गुरुं ख्यातं देवेशं वृषलेश्वरम् ॥३६॥ तले सहस्र चरणं सहस्रभुजमीश्वरम् ॥ सहस्राख्यं परिख्यातं मुसलाकृष्टदानवम् ॥ ३७ ॥ पाताले योगिनामीशं संस्थितं हरिशंकरम् ॥ धरा तलं कोकनदं मेदिन्यां चक्रपाणिनम् ॥३८॥ भुवर्लोके च गरुडं स्वर्लोके विष्णुमव्ययम् ॥ महर्ल्लोके तथाऽगस्त्यं कपिलं च जने स्थितम् ॥ ३९ ॥ तपोलोकेऽखिलं ब्रह्मन्वाङ्मयं सप्तसंयुतम् ॥ ब्रह्माणं ब्रह्मलोके च सममेव प्रतिष्ठितम् ॥४०॥सनातनं तथा शैवे परं ब्रह्म च वैष्णवे ॥ अप्रतर्क्यं निरालम्बे निराकारे तपोमयम् ॥४१॥ जम्बूद्वीपे चतुर्बाहुं कुशद्वीपे कुशेशयम् ॥ प्लक्षद्वीपे मुनि श्रेष्ठ ख्यातं गरुडवाहनम् ॥ ४२ ॥ पद्मनाभं तथा क्रौञ्चे शाल्मले वृषभध्वजम् ॥ सहस्राक्षः स्थितः शाके वामनः पुष्करे स्थितः ॥ ४३ ॥ तथा पृथिव्यां ब्रह्मर्षे शालिग्रामे स्थितोऽप्यहम् ॥ सजलस्थलपर्यन्तमशेषस्थावरेषु च ॥ ४४ ॥ एतानि पुण्यानि महा लयानि ब्रह्मन्पुराणानि सनातनानि ॥ ब्रह्मप्रदानीह महौजसानि संकीर्तनीयान्यघनाशनानि ॥ ४५ ॥ सकीर्तनान्नाशमुपैति पापं संदर्शनादेव च देवतायाः ॥ धर्मोऽर्थकामावपवर्गमेव देवा लभन्ते मनुजाः ससाध्याः ॥४६॥ एतानि तुभ्यं विनिवेदितानि महा

लयानीह मया निजानि ॥ उत्तिष्ठ गच्छामि महासुरस्य यज्ञं सुराणां हि हिताय विप्र॥४७॥[ पुलस्त्य उवाच ]॥ इत्येवमुक्त्वा वचनं महर्षे विष्णुर्भरद्वाजमृषिं महात्मा ॥ विलासलीलागमनो गिरीन्द्रात्स चाभ्यगच्छत्कुरुजाङ्गलं हि ॥ ४८ ॥ इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे वामनप्रादुर्भावे स्वस्थानकथनं नाम नवतितमोऽध्यायः ॥ ९० ॥[ पुलस्त्य उवाच ]॥ ततः समागच्छति वासुदेवे मही चकम्पे गिरयश्च चेलुः ॥ क्षुब्धाः समुद्रा दिवि सर्वलोको बभौ विपर्यस्तगतिर्महर्षे ॥१॥ यज्ञः समागात्परमाकुलत्वं न वेद्मि किं मां मधुहा करिष्यति ॥ यथा प्रदग्धोऽस्मि महेश्वरेण किं मां न संवक्ष्यति वासुदेवः ॥ २ ॥ ऋक्साममन्त्राहुतिभिर्हुतास्तु तेऽप्यासुरीया ज्वलनास्तु भागान् ॥ भक्ष्यान् द्विजेन्द्रैरपि संप्रदत्तान्नैव प्रतीच्छन्ति विभोर्भयेन ॥३॥ तं दृष्ट्वा घोररूपं तु निमित्तं दानवेश्वरः ॥ पप्रच्छौशनसं शुक्रं प्रणिपत्य कृताञ्जलिः॥४॥ किमर्थमाचार्य मही सशैला रम्भेव वाताभिहता चचाल ॥ किमासुरीयाश्च हुतानपीह भागान्न गृह्णन्ति हुताशनाश्च ॥ ५ ॥ क्षुब्धाः किमर्थं मकरालया विभो ऋक्षाणि खे नैव चरन्ति पूर्ववत् ॥ दिशः किमर्थं तमसा परिप्लुता दोषेण कस्याद्य वदस्व मे गुरो॥६॥ पुलस्त्य उवाच ॥ शुक्रस्तद्वाक्यमाकर्ण्य विरोचनसुतेरितम् ॥ अथो ज्ञात्वा कारणं च ततो वचनमब्रवीत् ॥ ७ ॥[ शुक्र उवाच ]॥ शृण्वद्य दैत्येश्वर येन भागान्नामी प्रयच्छन्ति महासुरेभ्यः ॥ हुताशना मन्त्रहुतास्त्वमीभिर्नूनं समागच्छति वासुदेवः ॥ ८ ॥ तदङ्घ्रिविक्षेपमपारयन्ती मही सशैला चलिता दिशश्च ॥ तस्यां चलन्त्यां मकरालयाश्च तूद्वृत्तवेला दितिजाद्य जाताः ॥९॥[ पुलस्त्य उवाच ]॥ शुक्रस्य वचनं श्रुत्वा बलिर्भार्गवम-

